ध्यमानः पृथुललाटतटघटितविकटकौटिल्यशतोरणत्रिशूलायमानभीषण-भ्रुकुटिरापिबन्निव नः सर्वान्दृष्टिपातैः सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिवर्तते। तन्न युक्तमस्य पुरतः स्थातुम्।

इति निष्क्रान्तौ।

॥ प्रस्तावना ॥

ततः प्रविशति सहदेवानुगम्यमानः क्रुद्धो भीमसेनः ।

भीमसेनः । आः दुरात्मन्वृथामङ्गलपाठक शैलूषापसद । लाक्षागृहेत्यादि पुनः पठति ।

सहदेवः । आर्य मर्षय मर्षय । अनुमतमेव नो भरतपुत्रस्यास्य वचनम् । पश्य । निर्वाणवैरदहना इति यथार्थमेव सभृत्याः कुरवः क्षतजालंकृतवसुंधराः क्षतशरीराश्च स्वर्गस्था भवन्तीति ब्रवीति ।

भीमसेनः । न खलु न खलु । अमङ्गलानि चिन्तयितुं नार्हन्ति भवन्तः कौरवाणाम् । संधेयाश्च ते भ्रातरो युष्माकम् ।

सहदेवः । सरोषम् । आर्य ।

धृतराष्ट्रस्य तनयान्कृतवैरान्पदे पदे ।
राज्ञा न चेन्निषिद्धा स्यात्कः क्षमेत तवानुजः ॥ ९ ॥

भीमसेनः । एवमिदम् । तत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः । पश्य ।

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न च खलु किरीटी न च युवाम् ।
जरासंधस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा संधिं भीमो विघटयति यूयं घटयत ॥ १० ॥

सहदेवः। एवमिति संभ्रमक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः।

भीमसेनः। सहासम्। किं नाम खिद्यते गुरुः। गुरुः खेदमपि जानाति। पश्य।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥ ११॥

तत्सहदेव निवर्तस्व। एवं चातिचिरप्रवृद्धामर्षोद्दीपितस्य भीमसेनस्य वचनाद्विज्ञापय राजानम्।

सहदेवः। आर्य किमिति।

भीमसेनः। एवं विज्ञापय।

*युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं*
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव॥ १२॥

इत्युक्त्वा परिक्रामति।

सहदेवः। तमेवानुगच्छन्। आत्मगतम्। अये कथमार्यः पाञ्चाल्याश्चतुःशालं प्रविष्टः। भवतु तावदहमत्रैव तिष्ठामि। इति स्थितः।

भीमसेनः। प्रतिनिवृत्यावलोक्य च। सहदेव गच्छ त्वं गुरुमनुवर्तस्व। अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि।

सहदेवः। आर्य नेदमायुधागारं पाञ्चाल्याश्चतुःशालमिदम्।

भीमसेनः। किं नाम नेदमायुधागारं पाञ्चाल्याश्चतुःशालमिदम्। किंचिद्विहस्य। आमन्त्रयितव्या मया पाञ्चाली। सहदेवं हस्ते गृहीत्वा। वत्स यदार्यः

चेटी। उपसृत्य। जअदु जअदु कुमालो।

भीमसेनः। अनुपजातक्रोधे यज्ञपूर्तमिति पुनः पठति।

चेटी। परिकुविदो विअ कुमालो लक्खीअदि।

द्रौपदी। हञ्जे जइ एव्वं ता अवहीरणा वि एसा मे अस्सासअइ। ता उवविट्ठा भविअ सुणोमि दाव णाहस्स ववसिदं। तथा कृत्वा।

भीमसेनः। साक्षेपम्। सहदेवमधिकृत्य। किं नाम। पञ्चभिर्ग्रामैः संधिः।

मथ्नामि कौरवशतं समरे न कोपा-
द्दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥ १५ ॥

चेटी। इदो वि अहिअं अज्ज मणुकालणं आसी देवीए।

भीमसेनः। किं नामास्मादप्यधिकम्। तत्कथय कथय।

कौरव्यवंशदावे ऽस्मिन्क एष शलभायते।
मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव॥ १९॥

चेटी। सुणादु कुमारो। अज्ज देवी अम्बासहिदा सुभद्दप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जगन्धारीए पादवन्दणं कादुं गदा आसी।

भीमसेनः। युज्यत एवमेतत्। अभिवन्दनीया गुरवः।

चेटी। तदो पडिणिउत्तमाणा भाणुमदीए दिट्ठा।

भीमसेनः। आः। शत्रोर्भार्यया दृष्टा। युक्तं क्रोधस्थानम्। ततस्ततः।

चेटी। तदो ताए देविं पेक्खिअ सहीवअणादिण्णदिट्ठीए सगव्वं इसि विहसिअ भणिदं।

भीमसेनः। न केवलं दृष्टोक्ता च। अहो किं कुर्मः। ततस्ततः।

चेटी। अयि जण्णसेणि पञ्च गामा पत्थीअन्ति त्ति सुणीअदि कीस दाणिं वि दे केसा ण संजमीअन्ति।

भीमसेनः। सहदेव श्रुतम्।

सहदेवः। आर्य किमिहोच्यते। दुर्योधनकलत्र हि सा। पश्य।

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तसदृशानि।
मधुरापि हि मूर्छयते विषविटपि समाश्रिता वल्ली॥ २०॥

भीमसेनः। बुद्धिमतिके ततो देव्या किमभिहितम्।

चेटी। कुमार जइ परिजणहीणा भवे तदो देवी भणादि।

भीमसेनः। किं पुनरभिहितं भवत्या।

चेटी। कुमार मए एव्व भणिदं। अयि भाणुमदि तुम्हाणं अमुक्केसु केसेसु कहं अम्हाणं देवीए केसा संजमीअन्ति त्ति।

भीमसेनः। सपरितोषम्। साधु बुद्धिमतिके साधु। तदभिहितं यदस्मत्परिजनोचितम्। स्वाभरणानि बुद्धिमतिकायै प्रयच्छति। अत्रभवति पाञ्चालराजतनये किं बहुना। श्रूयताम्। अचिरेणैव कालेन

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ २१ ॥

द्रौपदी। किं णाह दुक्करं तुए परिकुविदे अणुगेण्हन्तु एदं ववसिदं दे भादरो।

सहदेवः। अनुगृहीतमेतदस्माभिः।

नेपथ्ये महान्कलकलः।

सर्वे सविस्मयमाकर्णयन्ति।

भीमसेनः।

मन्थायस्तार्णवाम्भःप्लुतिकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुपतिनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितो ऽयम् ॥२२॥

प्रविश्य सभ्रान्तः

कञ्चुकी। कुमार। एष खलु भगवान्वासुदेवः। सर्वे कृताञ्जलयः समुत्तिष्ठन्ति।

भीमसेनः। क्वासौ क्वासौ भगवान्।

कञ्चुकी। पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः। सर्वे सभयं नाटयन्ति।

भीमसेनः। किं संयतः।

कञ्चुकी। न हि न हि संयमितुमारब्धः।

भीमसेनः। किं कृतं देवेन।

कञ्चुकी। ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्छितमवधूय कुरुकुलमस्मच्छिबिरसंनिवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति।

भीमसेनः। सोपहासम्। किं नाम दुरात्मा सुयोधनो भगवन्तं संयमितुमिच्छति। आकाशे दत्तदृष्टिः। आः दुरात्मन्कुरुकुलपांसन। एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम्।

सहदेवः। आर्य किमसौ दुरात्मा सुयोधनो वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति।

भीमसेनः। वत्स मूढः खल्वयं दुरात्मा कथं जानातु। पश्य।

आत्मारामा विहितमतयो निर्विकल्पे समाधौ
ज्ञानोत्सेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते किमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम्॥ २३॥

आर्य मैत्रेय किमिदानीमध्यवस्यन्ति गुरवः।

कञ्चुकी। स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः। इति निष्क्रान्तः।

नेपथ्ये। कलकलानन्तरम्। भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयो ऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च शृण्वन्तु भवन्तः।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसंभृतं नृपवधूकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते॥ २४॥

कञ्चुकी। न हि न हि संयमितुमारब्धः।

भीमसेनः। किं कृतं देवेन।

कञ्चुकी। ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्छितमवधूय कुरुकुलमस्मच्छिबिरसंनिवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति।

भीमसेनः। (सोपहासम्) किं नाम दुरात्मा सुयोधनो भगवन्तं संयमितुमिच्छति। (आकाशे दत्तदृष्टिः) आः दुरात्मन्कुरुकुलपांसन। एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम्।

सहदेवः। आर्य किमसौ दुरात्मा सुयोधनो वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति।

भीमसेनः। वत्स मूढः खल्वयं दुरात्मा कथं जानातु। पश्य।

आत्मारामा विहितमतयो निर्विकल्पे समाधौ
ज्ञानोत्सेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते किमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम्॥ २३॥

आर्य मैत्रेय किमिदानीमध्यवस्यन्ति गुरवः।

कञ्चुकी। स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः।

(इति निष्क्रान्तः।)

नेपथ्ये। (कलकलानन्तरम्।) भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयो ऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च शृण्वन्तु भवन्तः।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसंभृतं नृपवधूकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते॥ २४॥

अणावेक्किदसरीरा संचरिस्सदू जदो अप्पमत्तसंचरणिज्जाइं रिउवलाइं सुणीअन्ति।

भीमसेनः। शृणु सुक्षत्रिये समर्था वयं संक्रमितुम्।

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
संग्रामैकार्णवान्तः पयसि विचरितुं पण्डिताः पाण्डुपुत्राः॥२७॥

इति निष्क्रान्ताः सर्वे।

॥ इति प्रथमो ऽङ्कः ॥

ततः प्रविशति कञ्चुकी।

कञ्चुकी। आज्ञापितो ऽस्मि महाराजदुर्योधनेन। विनयंधर गच्छ त्वं सत्वरमन्विष्यतां देवी भानुमती। अपि निवृत्ताम्बायाः पादवन्दनसमयान्न वेति। यतस्त्वां विलोक्य निहताभिमन्यवो राधेयजयद्रथप्रभृतयः क्षत्रियाः समरभूमिं गत्वा सभाजयितव्या इति। तन्मया त्वरिततरं गन्तव्यमिति। अहो प्रभविष्णुता महाराजस्य यन्मम जरसाभिभूतस्य मर्यादामात्रमेवावरोधनिवासः। अथवा किमिति जरामुपालभामहे यतः सर्वान्तःपुरिकाणामयमेव वेयवहारिको वेषश्चेष्टा च। तथा हि।

नोच्चैः सत्यपि चक्षुषीक्षितमलं श्रुत्वापि नाकर्णितं

*अस्त्वेवाप्यधिकार इत्यधिकृता यष्टिः समालम्ब्यते।*

सर्वत्र स्खलितेषु दत्तमनसा यातं मया नोद्धतं

सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम्॥ २८॥

परिक्रम्य दृष्ट्वा। आकाशे। विहंगिके। अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती। कर्णं दत्त्वा। किं कथयसि। आर्य। एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्तितगुरुपादवन्दनाद्यप्रभृत्यारब्धनियमा देवगृहे बालोद्याने तिष्ठतीति। तद्भद्रे गच्छ त्वमात्मव्यापाराय यावदहमप्यत्रस्थां

देवीं महाराजस्य निवेदयामीति। परिक्रम्य। साधु पतिव्रते साधु। स्त्रीस्वभावेऽपि वर्तमाना वरं भवती न पुनर्महाराजः। यो ऽयमुद्यतेषु बलवत्स्वबलवत्सु वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्वद्याप्यन्तःपुरविहारमनुभवति। विचिन्त्य। इदमयथातथं स्वामिनश्चेष्टितम्। कुतः।

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-

स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।

प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो

बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥२१॥

सर्वथा दैवं नः स्वस्ति करिष्यतीति। तद्यावदत्रस्थां देवीं महाराजस्य निवेदयामि। इति निष्क्रान्तः।

॥ विष्कम्भकः ॥

ततः प्रविशत्यासनस्था भानुमती सखी चेटी च।

सखी। सहि भाणुमदि कीस दाणि तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअधीरभावा अतिमेत्तं संतप्पसि।

चेटी। भट्टिणि सोहणं भणादि सुवअणा।

भानुमती। एव्वं णेदं।

चेटी। सिविणअलो जणो किं ण क्खु किल पि ण पअदि।

भानुमती। हञ्जे एव्वं णेदं किं उण इदं मे अकुसलदंसणं पडिभादि सिविणअं।

सखी। पिअसहि जइ एव्वं ता कहेहि सिविणअं जं अम्हे वि पडिस्सा-

वअत्तीओ धम्मप्पसंसाए देवदासंकित्तणेण दुव्वादिपडिग्गहेण अ पडि-
हडिस्सामो।

चेटी। सोहणं क्खु भणादि सुवअणा अकुसलदंसणा सिविणआ देवदाणं पसंसाए कुसलपरिणामा होन्ति त्ति सुणीअदि।

भानुमती। जइ एव्वं ता कहइस्सं अवहिदा दाव होहि।

सखी। अवहिदम्हि कहेदु पिअसही।

भानुमती। अज्ज किल मे पमदवणे आसीणाए केण वि अदिसइद-
दिव्वरूवेण णउलेण अहिसदं वावादिदं। उभे यातागतमवधार्य।

सखी। सन्तं पावं सन्तं पावं पडिहदं अमङ्गलं। प्रकाशम्। देवि तदो तदो।

भानुमती। हला भएण विसुमरिदम्हि ता चिट्ठ जाव सव्वं सुमरिअ
कहइस्सं। इति चिन्तां नाटयति।

ततः प्रविशति दुर्योधनः कञ्चुकी च।

दुर्योधनः। सूक्तमिदं कस्यचित्।

गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः।
करोति महतीं प्रीतिमपकारो ऽपकारिषु ॥ २० ॥

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्योच्छ्वसितमिव नश्चे-
तसा।

कञ्चुकी। देव नेदमतिदुष्करमाचार्यशल्यप्रभावाणाम्। कर्णजयद्रथयोर्वा
कात्र श्लाघा।

राजा। विनयंधर किमाह भवान्। एकाकी बहुभिर्बालो लूनशरा-
सनश्च निहत इति। पश्य।

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ २१ ॥

कञ्चुकी। देव नैवेदं कल्पयितुमर्हसि। किं तु तव पौरुषप्रतीघातोऽस्माभिर्नावलोकितपूर्व इति यत एवं ब्रवीमि।

राजा। एवमिदम्।

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम्॥ ३२॥

कञ्चुकी। कर्णौ पिधाय सभयम्। शान्तं पापं शान्तं पापम्।

राजा। विनयंधर किं मयोक्तम्।

कञ्चुकी। सहभृत्यगणमिति पठति। एतद्विपरीतमभिहितं देवेन।

राजा। विनयंधर। अद्य खलु भानुमती यथापूर्वमात्मानमनामन्त्र्य वासभवनात्प्रातरेव निष्क्रान्तेत्याक्षिप्तं मे मनः। तदादेशय तमुद्देशं यत्रस्था भानुमती।

कञ्चुकी। इत एतु देवः। उभौ परिक्रामतः।

कञ्चुकी। पुरोऽवलोक्य समन्ततो गन्धमाघ्राय। पश्य पश्य। एतत्तुहिनकणशिशिरसमीरणोद्वेल्लितबन्धनच्युतशेफालिकाविरचितकुसुमप्रकरमीषदालोहितमुग्धवधूकपोलपाटललोध्रप्रसूनविजितश्यामलतासौभाग्यमुन्मीलितवकुलकुन्दकुसुमसुरभिशीतलं प्रभातकालरमणीयमग्रतस्ते बालोद्यानम्। तथा हि।

प्रालेयमिश्रमकरन्दकरालकोशैः
पुष्पैः समं निपतिता रजनीप्रबुद्धैः।
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति॥ ३३॥

राजा। विनयंधर। इदमपरमस्मिन्नुपसि रमणीयतरम्। पश्य।

जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-

हस्तैर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः।
स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥ ३४ ॥

कञ्चुकी। देव नन्वेषा भानुमती सुवदनया तरलिकया च पर्युपास्य-माना तिष्ठति। तदुपसर्पतु देवः।

राजा। ऽदृष्ट्वा। विनयंधर गच्छ त्वं सांग्रामिकं रथमुपकल्पयितुम्। अहम-प्येष देवी दृष्ट्वानुपदमागत एव।

कञ्चुकी। एष कृतो देवादेशः। इति निष्क्रान्तः।

सखी। पिअसहि अवि सुमरिदं तुए।

भानुमती। सहि सुमरिदं। अज्ज किल पमदवणे आसीणाए मम अग्गदो केण वि अदिसइददिव्वरूवेण णउलेण अहिसदं वावादिदं।

उभे। अवधायात्मगतम्। सन्तं पावं सन्तं पावं। प्रकाशम्। तदो तदो।

भानुमती। सदावावगदोअद्धिअआए पुणो वि मए विसुमरिदं।

राजा। अहो देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्र-यमाणा तिष्ठति। भवत्वनेन लताजालेनान्तरितः शृणोमि तावदासां वि-स्रब्धालापम्। तथास्थितः।

सखी। अलं संदावेण कहेदु पिअसही।

राजा। किं नु खल्वस्याः संतापकारणम्। अथवानामन्त्र्य मामियमद्य वासभवनान्निष्क्रान्तेति समर्थित एवास्या मया कोपः। अयि भानुमति। अविषयः खलु दुर्योधनो भवत्याः कोपस्य।

किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखी नाद्यासि संभाविता।
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो

दोषं पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ३५ ॥

विचिन्त्य। अथवा।

इयमस्मदुपाश्रयैकचित्ता मनसा प्रेमनिबद्धमत्सरेण।
नियतं कुपितातिवल्लभत्वात्स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥ ३६ ॥

तथापि किं वक्ष्यतीति शृणुमस्तावत्।

भानुमती। हला हञ्ज तदो तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उस्सुआ जादा।

राजा। किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता। तत्किमनया माद्रीसुतानुरक्तया वयमेव विप्रलब्धाः। सोत्प्रेक्षम्। इयमस्मदिति पठित्वा। मूढ दुर्योधन कुलटाविप्रलभ्यमात्मानं बहुमन्यमानो ऽधुना किं न वक्ष्यसि। तदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनकथासु च पक्षपातः। दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः। आः पापे ऽस्मत्परिग्रहपांसनि।

तद्भीरुत्वं तव मम पुरः साहसानीदृशानि
श्लाघा सास्मद्वपुषि विनयव्युत्क्रमे ऽप्येष रागः।
तच्चौदार्यं मयि जडमतौ चापले को ऽपि पन्थाः
ख्याते तस्मिन्वितमसि कुले जन्म कौलीनमेतत् ॥ ३७ ॥

सखी। तदो तदो।

भानुमती। तदो अहं तुरिदं आसणट्ठाणं एदं लदामण्डवं पविट्ठा। तदो सो मं अणुसरन्तो एव्व लदामण्डवं पविट्ठो।

राजा। अहो कुलटोचितमेतस्याः पापायाः पापशीलत्वम्।

यस्मिंश्चिरप्रणयनिर्भरबालभाव-

मावेदितो रहसि मत्सुरतोपभोगः।
तत्रैव दुश्चरितमद्य निवेदयन्ती
क्रीतासि पापहृदये न सखीजने ऽस्मिन् ॥ ३८ ॥

उभे। तदो तदो।

भानुमती। तदो तेण सगव्वपसारिअकरेण अवहरिअं मे थणंसुअं।

राजा। विचिन्त्य। सगर्वप्रसारितकरेण हृतं मे स्तनांशुकम्। सक्रोधम्। अलमतः परं श्रुत्वा। भवतु तावत्तस्य परवनितास्कन्दनप्रगल्भस्य माद्रीसुतस्य जीवितमपहरामि। किंचिद्गत्वा विचिन्त्य। अथवा। इयमेव तावत्पापशीला प्रथममनुशासनीया। इति निवर्तते।

उभे। तदो तदो।

भानुमती। हला तदो हं अज्जउत्तस्स पभादमङ्गलतूररवमिस्सेण वारविलासिणीसंगीदसद्देण पडिबोधिदम्हि।

राजा। किं न खलु प्रतिबोधितास्मीति स्वप्नदर्शनमनया वर्णितम्। विचिन्त्य। भवतु सखीवचनाद्व्यक्तिर्भविष्यति।

उभे सविषादमन्योन्यं पश्यतः।

सुवदना। जं किं वि अच्चाहिदं तं भाईरहीपमुहाणं णाईणं सलिलेन अवहरीअदु भअवदाणं बम्हणाणं वि आसीसाए आहुदिहुदेण पज्जलिदेण भअवदा हुदासणेण दज्झदु।

राजा। अलं विकल्पेन स्वप्नदर्शनमेवैतदनया वर्णितम्। मया पुनर्मन्दधियान्यथैव संभावितम्।

दिष्ट्यार्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषार्धकथने किंचिन्मया व्याहृतम्।
मां प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता

मिथ्यादूषितयानया विरहितं दिष्ट्या न जातं जगत् ॥ ३९ ॥

भानुमती। हला कहेहि किं एत्थ सुहसूअग्रं।

सखी चेटी चान्योन्यमवलोक्य।

सखी। अपवार्य। एत्थ णत्थि थोअं वि सुहसूअग्रं। जइ एत्थ अलीग्रं कहइस्सं अवराहिणी भविस्सं। सो दाणिं सिणिद्धो जणो जो पुच्छिदो परुसं वि हिदं भणादि। प्रकाशम्। सहि सव्वं एव्व एदं असुहणिवेदणं ता देवदाणं पणामेण दुव्वादिपडिग्गहेण अ अन्तरीअदु। ण हु दाठिणो णउलस्स अणस्स वा दंसणं अहिसदवहं वि सिविणए पसंसन्ति विअक्खणा।

राजा। अवितथमाह सुवदना नकुलेन पन्नगशतवधः स्तनांशुकाहरणमिति नियतमनिष्टोदर्कं तर्कयामि।

पर्यायेण हि दृश्यन्ते स्वप्नाः काम शुभाशुभाः।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥ ४० ॥

वामाक्षिस्पन्दनं सूचयित्वा। आः ममापि नाम दुर्योधनस्यानिमित्तानि हृदयक्षोभमावेदयन्ति। सावष्टम्भम्। अथवा भीरुजनहृदयप्रकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु। गीतश्चायमर्थो ऽङ्गिरसा।

ग्रहाणां चरितं स्वप्नो निमित्तान्युपयाचितम्।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ ४१ ॥

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकां शङ्कामपनयामि।

भानुमती। हला सुवअणे उदअगिरिसिहरन्तरिदविमुक्कहवरो विअलिअसंकाराअप्पसण्णदूरालोअमण्डलो जादो भअवं दिअहणाहो।

चेटी। भट्टिणि रोसाणिदकणअकन्तिसस्सिरीएण लदाजालन्तरोवइदकिरणजालेण पिञ्जरिदुज्जाणभूमिभाओ पूरिअपइण्णो विअ दिढं दुप्पे-

कवणिज्जो भअवं सहस्सरस्सी संवुत्तो ता समप्पीअदु से लोहिदचन्दण-कुसुमगब्भेण अग्घेण पज्जवट्ठाइं।

भानुमती। हला तरलिए उवणेहि मे अग्घभाअणं जाव भअवदो सहस्सकिरणस्स सवरिअं णिव्वत्तेमि।

चेटी। जं देवी आणवेदि। इति निष्क्रम्य पुनः प्रविश्य। भट्टिणि इमं अग्घभाअणं णिव्वत्तेदु भअवदो सहस्सरस्सिणो सवरिअं।

राजा। अयमेव साधुतरोऽवसरः प्रियासमीपमुपगन्तुम्। इत्युपसर्पति।

सखी। विलोक्यात्मगतम्। कहं महाराओ आअदो हन्त जादो से णिअमभङ्गो।

भानुमती। दिनकराभिमुखी भूत्वा। भअवं अम्बरमहासरेक्कसहस्सपत्त पुव्वदिहावहूमुहमण्डणकुङ्कुमविसेसअ सअलभुअणेक्करअणप्पदीव जं एत्थ सिविणअदंसणे किं वि अच्चाहिदं तं भअवदो पणामेण सभादुअस्स अज्जउत्तस्स कुसलपरिणामी होदु। अर्घं दत्त्वा। हञ्जे तरलिए उवणेहि मे कुसुमाइं अवराणं वि देवदाणं सवरिअं णिव्वत्तेदुं। हस्तौ प्रसारयति।

राजा संज्ञया परिजनमुत्सार्य पुष्पाणि स्वयमुपनयति। स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति।

भानुमती। सरोषम्। अहो पमादो परिअणस्स। परिवृत्य राजानमवलोक्य ससाध्वसं लज्जां नाटयति।

राजा। देवि। अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे तथा प्रभवत्यनुशासने देवी। अये प्रिये।

विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः
परिजनपथवर्तिन्यत्र किं संभ्रमेण।
स्मितमधुरमुदारं देवि मामालपोच्चैः
प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम्॥ ४२॥

भानुमती। अब्भणुण्णादाउ मं महाराओ अत्थि मे कस्सिं वि णिअमे अहिलासो।

राजा। श्रुतविस्तार एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति तदलं प्रकृतिसुकुमारमात्मानं खेदयितुम्।

भानुमती। अज्जउत्त अदिमेत्तं मे सङ्का बाहेइ ता अणुमण्णदु मं अज्जउत्तो।

राजा। सगर्वम्। देवि। अलमनया शङ्कया। पश्य।

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि।
भीरु भ्रातृशतस्य मे भुजवनच्छायां सुखोपस्थिता
त्वं दुर्योधनकेशरीन्द्रगृहिणी शङ्कास्पदं किं तव ॥ ४३ ॥

भानुमती। अज्जउत्त ण क्खु किं वि मे सङ्काकालणं तुम्हेसु संणिहिदेसु किं तु अज्जउत्तस्स एव्वं मणोरहसंपत्तिं अभिणन्दामि।

राजा। अयि सुन्दरि। एतावन्त एव मनोरथा यदहं दयितया संगतः स्वेच्छया विहरामि। पश्य।

प्रेमाबन्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथं मन्दमन्दस्मितं वा।
वक्त्रेन्दुं ते नियममुषितालक्तकाग्राधरं वा
पातुं वाञ्छा परमसुलभं किं नु दुर्योधनस्य ॥ ४४ ॥

नेपथ्ये महान् कलकलः। सर्वे आकर्णयन्ति।

भानुमती। राजानं परिष्वज्य। परित्ताअदु परित्ताअदु अज्जउत्तो।

राजा। समन्तादवलोक्य। अलं प्रिये संभ्रमेण। पश्य।

दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांसुदण्डो ऽन्तरिक्षे

धात्कारी शर्करालः पथिषु विटपिनां स्कन्धकाषैः सधूमः।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु किं संभ्रमेण ॥ ४५ ॥

सखी। महाराग्रो पविसदु एदं दारुपव्वग्रपासादं उच्छेग्रकारी खु ग्रग्रं उत्थिदपरुसरग्रकलुसीकदणग्रणो विग्रलिग्रतरुवरसद्दवित्तत्थमन्दुरापरिब्भट्ठवच्छाहदतुरंगमो पज्जाउलीकिदजणपद्धई भीसणो समीरणासारो।

राजा। उपकारि खल्विदं वात्याचक्रं सुयोधनस्य यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या संपादितो ऽस्मन्मनोरथः। कथमिति।

न्यस्ता न भृकुटिर्न बाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः।
तन्व्या मग्नपयोधरं भयवशादाबद्धमालिङ्गितो
भङ्गास्या नियमस्य भीषणमरुन्नायं वयस्यो नु मे ॥ ४६ ॥

तत्संपूर्णमनोरथस्य मे कामचारः संप्रति विहारेषु तदितो दारुपर्वतमेव गच्छामः।

सर्वे वात्याबाधां रूपयन्तो यत्नतः परिक्रामन्ति।

राजा।

कुरु घनोरु पदानि शनैः शनै-
रपि विमुञ्च गतिं परिवेपिनीम्।
पतसि बाहुलतोपनिबन्धनं
मम निपीडय गाढमुरःस्थलम् ॥ ४७ ॥

प्रवेशं रूपयित्वा। अलब्धान्तरः समीरणः संवृतद्वारगर्भगृहस्य। विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम्।

भानुमती। सगर्वम्। दिट्ठिआ उप्पादसमीरणासारो ण बाधेदि।

सखी। महाराअ आरोहणसंभमणिस्सहं पिअसहीए ऊरुजुअलं ता कीस दाणिं महाराओ आसणवेदिं ण अणुभूसेदि।

राजा। देवीमवलोक्य। भवति। अनल्पमेवापकृतं वात्यासंभ्रमेण। तथा हि।

रेणुर्बाधां विधत्ते तनुरपि महती नेत्रयोरायतत्वा-
दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरःक्षिप्तहारं दुनोति।
ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वेपथुर्वर्धतेऽस्या
वात्या खेदं कृशाङ्ग्याः सुचिरमवयवैर्दत्तहस्ता करोति॥ ४८॥

सर्व उपविशन्ति।

राजा। तत्किमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते देवी।

लोलांशुकस्य पवनाकुलितांशुकान्त
त्वद्दृष्टिहारि मम लोचनबान्धवस्य।
अध्यासितुं तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु ममोरुयुग्मम्॥ ४९॥

प्रविश्य सम्भ्रान्त

कञ्चुकी। देव भग्नं भग्नम्। सर्वे सातङ्कं पश्यन्ति।

राजा। किं नाम।

कञ्चुकी। देव भग्नं भीमेन।

राजा। आः किं प्रलपसि।

भानुमती। अज्ज किं अणत्थं मन्तेसि।

कञ्चुकी। सभयम्। देव कथयामि सर्वम्।

भग्नं भीमेन भवतो मरुता रथकेतनम्।

पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥ ५० ॥

राजा। बलवत्समीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनकेतुः तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति।

कञ्चुकी। देव न किंचित्। किं तु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति।

भानुमती। अज्जउत्त पडिहरीअदु एदं अणिमित्तं पसणबम्हणवेआणुघोसेण होमेण अ।

राजा। सावज्ञम्। किं तु सूतपुरोहिताय सुमित्राय निवेदय।

कञ्चुकी। यदाज्ञापयति देवः। इति निष्क्रान्तः।

प्रविश्य

प्रतिहारी। सोद्वेगमुपसृत्य। जअदु जअदु महाराओ। महाराअ एसा खु जामादुणो सिन्धुराअस्स मादा वहू दुस्सला अ पडिहारभूमीए चिट्ठदि।

राजा। स्वगतम्। किं जयद्रथमाता दुःशला चेति क्वाचिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न कश्चिदत्याहितमाचेष्टितं भवेत्। प्रकाशम्। गच्छ प्रवेशय शीघ्रम्।

प्रतिहारी। जं महाराओ आणवेदि। इति निष्क्रान्ता।

ततः प्रविशति सम्भ्रान्ता जयद्रथमाता दुःशला च। उभे साश्रु दुर्योधनस्य पादयोः पततः।

माता। परित्ताअदु परित्ताअदु कुरुणाहो। दुःशला रोदिति।

राजा। ससम्भ्रममुत्थाप्य। अम्ब समाश्वसिहि समाश्वसिहि किमत्याहितम्। अपि कुशलं समराङ्गनेष्वप्रतिरथस्य जयद्रथस्य।

माता। जाद कुदो कुसलं।

राजा। कथमिव।

माता। साशङ्कम्। अज्ज खु पुत्तवहामरिसुद्दीविदेण गण्डीविणा अणत्थ-

मिदे दिग्रसणादे तस्स वहो पडिणादो।

राजा। सस्मितम्। इदं तदश्रुकारणमम्बाया दुःशलायाश्च। पुत्रशोकाद्दुत्तप्तस्य किरीटिनः प्रलापैरेवमवस्था। अहो मुग्धत्वमबलानाम्। अम्ब कृतं विषादेन। वत्से दुःशले ऽलमश्रुपातेन। कुतश्चायमस्य धनंजयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम्।

माता। जाद जदो अ बन्धुवहामरिसुद्दीविदकोवाणला अणवेक्खिदसरीरा वीरा परिक्कमन्ति।

राजा। सोपहासम्। एवमेतत्। सर्वजनप्रसिद्धमेवामर्षित्वं पाण्डवानाम्। पश्य।

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रमभितो गौर्गौरिति व्याहृता।
तस्मिन्नेव स किं नु गाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत्॥ ५१॥

माता। असमत्तपडिणाभरस्स अण्णवहो से पडिणादो।

राजा। यद्येवमलमानन्दस्थाने ऽपि ते विषादेन। ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति। मातर्न शक्तिरस्ति धनंजयस्य वान्यस्य कुरुशतपरिवारवर्धितमहिम्नः कृपकर्णद्रोणाश्वत्थामादिमहारथद्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य। अयि सुतपराक्रमानभिज्ञे।

धर्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन।
एको ऽपि विस्फुरितमण्डलचापचक्रं

कः सिन्धुराजमभिषेणयितुं समर्थः ॥ ५२ ॥

भानुमती। अज्जउत्त जइ वि एव्वं तह वि गुरुकिदपडिण्णाभरो धनं-जओ णिदाणं क्खु सङ्काए।

माता। जादे साहु कालोइदं तुए मन्तिदं।

राजा। आः ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः। पश्य।

कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटामुक्तदेहैः
क्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां चमूना-
माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः संपतन्ति ॥ ५३ ॥

अविज्ञातपाण्डवप्रभावे किं त्वमप्येवमाशङ्कसे। पश्य।

दुःशासनस्य हृदयक्षतजाम्बुपाने
दुर्योधनस्य च यथा गदयोरुभङ्गे।
तेजस्विनां समरमूर्धनि पाण्डवानां
ज्ञेया जयद्रथवधे ऽपि तथा प्रतिज्ञा ॥ ५४ ॥

कः को ऽत्र भोः। जैत्रं मे रथमुपपादय तावद्यावदहमपि तस्याप्रगल्भस्य पाण्डवस्य जयद्रथपरिरक्षणेन मिथ्याप्रतिज्ञावैलक्ष्यसंपादितमशस्त्रपूतं मरणमुपदिशामि।

प्रविश्य

कञ्चुकी। देव।

उद्घातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः।
सज्जो ऽयं नियमितवल्गितातुरत्वाश्वः
शत्रूणां क्षपितमनोरथो रथस्ते ॥ ५५ ॥

ततः प्रविशति विकृतवेषा राक्षसी।

राक्षसी। विकृतं विहस्य सपरितोषम्।

हदमाणुशमंशभोअणे कुम्भशहश्शवशाहि शंचिदे।

अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुविश्शदि ॥५८॥

नृत्यन्ती सपरितोषम्। जइ शिन्धुलाअवहदिअहे विअ शमलकम्म पडिवज्जइ अज्जुणो तदो अ पज्जत्तभलिदगोट्ठागाले मंशशोणिएहिं मे गेहे हुवीअदि। परिक्रम्य दिशो ऽवलोक्य। अह कहिं ण लुहिलप्पिए हुवीअदि। ता जाव इमश्शिं शमले पिअभत्तालं लुहिलप्पिअं अण्णेशामि। परिक्रम्य। होदु शद्दावइश्शं दाव। लुहिलप्पिआ लुहिलप्पिआ इदो एहि इदो एहि।

ततः प्रविशति तथाविधो राक्षसः।

राक्षसः। श्रमं नाटयन्।

पच्चग्गहदाणं मशए जइ उण्हे लुहिले अ लब्भइ।

ता एशे मह पलिश्शम खणमेत्त एव्व लहु णश्शइ ॥५९॥

राक्षसी पुनराह्वयति।

राक्षसः। साश्चर्यम्। अले के एशे मं शद्दावेदि। विलोक्य। अले कहं वशा-गन्धा। उपसृत्य। वशागन्धे मं कीश शद्दावेशि।

राक्षसी। लुहिलप्पिआ एदं क्खु तुह कालणादो पच्चग्गहदश्श कण्ण

वि लाएशिणी शलीलावअवप्पळूदं पळूदवशाशिणोह्चिकूणं कोण्ह्ं लुह्लिं अग्गमंशं च आणीदं ता पिबाह्मि णं।

रात्तसः सपरितोषम्। शाङ्कु वशागन्धे शाङ्कु शोह्णं किदं तुए वलिअम्हि पिआशिदे एदं कोशिणं लुह्लिं आणीदं।

रात्तसी। लुह्लिप्पिआ ईदिशे ह्दणलगअतुलंगमशोणिअवशाणमुद्दुश्शंचले शमलाङ्गणे पडिब्भमन्ते तुमं पिवाशिअशि त्ति अचलिअं अचलिअं।

रात्तसः। सक्रोधम्। अले वशागन्धे। पुत्तघडुक्कअशोअशंतत्तहिअअं शामिणिं हिडम्बादेइ पेक्खिदुं गदम्हि।

रात्तसी। लुह्लिप्पिआ अज्ज वि शामिणीए हिडिम्बादेईए घडुक्कअशोए ण उबशम्मदि।

रात्तसः। अइ कुदो शे उबशमे। किं तु अहिमण्णुवहशोअशमाणाडुक्काए शुभद्दादेवीए ज्ञाशेणीए अ शमाशाशीअदि।

रात्तसी। लुह्लिप्पिआ गेण्ह तुम एद हत्थिशिलकबालशंचिअं अग्गमंशोबदंशं अ पिबाहि णवशोणिआशवं।

रात्तसः। तथा कृत्वा। वशागन्धे अह किअप्पळूदं तुए शंचिअं लुह्लिं अग्गमंशं च।

रात्तसी। अले लुह्लिप्पिआ। पुव्वशंचिअ तुमं जेव्व जाणाशि णवशंचिअं शिणु। भअदत्तशोणिअकुम्भे शिन्धुलाअवशाकुम्भे दुवे। मच्छाहिवभूलिश्शवशोमदत्तवल्हीअप्पमुहाणं णलिन्दाणं पाकिदपुलिशाणं च लुह्लिवशामंशश्श घडा अविणड्डमुहा शहश्शशंक्खा शन्ति मे गेहे।

रात्तसः। सपरितोषमालिङ्ग्य। शाङ्कु शाङ्कु शुग्घलिणीए शाङ्कु शाङ्कुं

इमिणा दे शुघलिणित्तणेण शामिणीए हिडिम्बादेवीए शंविहाएण अ पणट्ठं मे दालिद्दं।

राक्खसी। लुद्धिलप्पिआ केलिशे शामिणीए शंविहाए किदे।

राक्खसः। अज्ज अहं शामिणीए हिडिम्बादेईए शवङ्कमाण शद्दाविअ आणत्ते जह लुद्धिलप्पिआ अज्ज पङ्कदि अज्जउत्तभीमशेणश्श पिट्ठदो-णुपिट्ठं शमले आहिण्डिदव्वं त्ति। ता तश्श अणुमग्गगामिणो हदमाणु-शंशोणिअणईदंशणाप्पणट्ठबुभुक्खापिवाशश्श इह एव्व शंगमो तुमलओ मे ळुवीअदि तुमं वि,विश्शद्धा भविअ लुद्धिलवशाहिं कुम्भशहश्शं शंचिहि।

राक्खसी। लुद्धिलप्पिआ किं णिमित्तं कुमालभीमशेणश्श पिट्ठदोणु-पिट्ठं आहिण्डीअदि।

राक्खसः। वशागन्धे तेण शामिणा विओदलेण दुश्शाशणश्श लुद्धिलं पादुं पडिण्णादं तं च अम्हेहिं लक्खशेहिं अणुप्पविशिअ पादव्वं त्ति।

राक्खसी। सहर्षम्। शाहु शामिणीए शाहु। शुशंविहाणे मे भत्ता तुए कदे।

नेपथ्ये महान् कलकलः । उभावाकर्णयतः ।

राक्खसी। श्रुत्वा ससंभ्रमम्। अले लुद्धिलप्पिआ किं णु क्खु एशे महन्ते कलअले शुणीअदि।

राक्खसः। दृष्ट्वा। हला वशागन्धे एशे क्खु धिट्ठज्जुणेण दोणे केशेशु आ-कड्ढिअ अशिवत्तेण वावादीअदि।

राक्खसी। सहर्षम्। लुद्धिलप्पिआ लुद्धिलप्पिआ। अम्हे वि आगच्छिअ दोणश्श लुद्धिलं पिवम्ह।

राक्खसः। सभयम्। वशागन्धे बम्हणशोणिअं क्खु एअं गलअं दहन्ते

पविशदि ता किं एदिणा।

नेपथ्ये पुनः कलकलः।

राक्षसी। लुहिलप्पिआ पुणो वि एशे मह्न्ते कलअले शुणीअदि।

राक्षसः। नेपथ्याभिमुखमवलोक्य। वशागन्धे एशे क्खु अश्शत्थामे आकट्ठि-दाशिवत्ते इदो एव्व आअच्छदि कदा वि दुवदशुदलोशेण अम्हे वि वा-वादइश्शदि। ता एह्नि णामिणीए हिडम्बादेईए आणत्तिं कलेम्ह।

इति निष्क्रान्तौ।

॥ प्रवेशकः ॥

ततः प्रविशत्युत्खातखड्गः कलकलमाकर्णयन्नश्वत्थामा।

अश्वत्थामा।

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥ ५७॥

विचिन्त्य। ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पातिक्रान्तमर्यादेन परिकोपितस्तातः समुल्लङ्घ्य शिष्यप्रियतामात्मसदृशभावमाचेष्टते। तथा हि।

यद्दुर्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे
रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य यत्सांप्रतम्।
लोके सर्वधनुष्मतामधिपतेर्यद्यानुरूपं रुषः

अश्वत्थामा। सक्रोधम्। किं ब्रूथ। कुतोऽद्यापि ते तात इति। आः क्षुद्रा भीरवः कथमेव प्रलपतां वः सहस्रधा न दीर्णमनया जिह्वया।

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे॥ ६१॥

प्रविश्य सभ्रान्तः सप्रहारः

सूतः। परित्रायतां परित्रायतां कुमारः। इति पादयोः पतति।

अश्वत्थामा। विलोक्य। अये कथं तातसारथिरश्वसेनः। आर्य त्रैलोक्यत्राणक्षमस्य तातस्य सारथिरसि किं मत्तः परित्राणमिच्छसि।

सूतः। उत्थाय सकरुणम्। कुतोऽद्यापि ते तातः।

अश्वत्थामा। सावेगम्। किं तात एव नास्ति।

सूतः। अथ किम्।

अश्वत्थामा। हा तात। इति मोहमुपगतः।

सूतः। समाश्वसिहि समाश्वसिहि कुमार।

अश्वत्थामा। लब्धसंज्ञः सास्रम्। हा तात हा सुतवत्सल हा लोकत्रयैकधनुर्धर हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन्।

सूतः। अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि त्वदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखीभव।

अश्वत्थामा। अश्रूणि विमुच्य। आर्य कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपागतः।

किं भीमाद्गुरुदक्षिणां गुरुगदाद्भीमप्रियः प्राप्तवान्

सूतः। शान्तं पापं शान्तं पापम्।

सूतः। कुमार। अलमत्यन्तपरिदेवनकार्पण्येन।

अश्वत्थामा।

श्रुत्वा वधं मम मृषा सुतवत्सलेन
　तात त्वया सह शरीरसवो विमुक्ताः।
जीवाम्यहं पुनरयं भवता वियुक्तः
　क्रूरेऽपि तन्मयि मुधा तव पक्षपातः॥ ६५॥

इति मोहमुपगतः।

सूतः। समाश्वसितु समाश्वसितु कुमारः।

ततः प्रविशति कृपः।

कृपः।

धिक्सानुजं कुरुपतिं धिगजातशत्रुं
　धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान्।
केशग्रहः खलु तदा द्रुपदात्मजाया
　द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः॥ ६६॥

तत्कथं नु खलु वत्सं द्रक्ष्याम्यश्वत्थामानम्। अथवा हिमवत्सारगुरुचेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के। किं तु पितुः परिभवमसदृशमुपश्रुत्य किं व्यवस्यतीति न जाने। अथवा।

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः॥ ६७॥

विभाव्य। तदयं वत्सस्तिष्ठति यावदुपसर्पामि। उपसृत्य ससंभ्रमम्। वत्स समाश्वसिहि समाश्वसिहि।

अश्वत्थामा। लब्धसंज्ञः सास्रम्। हा तात हा सकलभुवनैकगुरो। आकाशे। युधिष्ठिर युधिष्ठिर।

आ जन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः।
ताते गुरौ द्विजवरे मम भाग्यदोषा-
त्सर्वं तदेकपद एव कथं निरस्तम्॥ ६८॥

सूतः। कुमार। एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति।

अश्वत्थामा। पार्श्वे विलोक्य सबाष्पम्। मातुल मातुल।

गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणां गुरुसमरकण्डूनिकषणः।
परीक्षासाक्षित्राः सततमभवन्येन भवतः
स्वसुः श्लाघ्यो भर्ता क्व नु खलु स ते मातुल गतः॥ ६९॥

कृपः। परिगतः। परिगन्तव्य एव भवान्। अलमत्यन्तशोकावेगेन।

अश्वत्थामा। मातुल परित्यक्तमेव मया परिदेवनम्। एषो ऽहं सुतवत्सलं तातमेवानुगच्छामि।

कृपः। वत्स। अनुपपन्नमीदृशं भवद्विधानाम्।

सूतः। कुमार। अलमतिसाहसेन।

अश्वत्थामा। आर्य किमुच्यते।

मद्वियोगभयात्तातः परलोकमितो गतः।
करोमि विरहं तस्य वत्सलस्य कथं पितुः॥ ७०॥

कृपः। वत्स यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वये ऽप्यनुवर्तनीया इति। पश्य।

निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा॥ ७१॥

सूतः। आयुष्मन्। यदाह शारद्वतः।

अश्वत्थामा। आर्य सर्वमेवेदं किं त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः प्राणान्धारयितुं क्षणमपि। तद्गच्छामि तमेवोद्देशं यत्र तादृशं पितरं द्रक्ष्यामि। उत्क्षिप्तखड्गमालोक्य विचिन्त्य। अलमधुनापि शस्त्रग्रहणविडम्बनया। भगवञ्छस्त्र।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्यासीन्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥ ७२ ॥

परित्यक्तुमिच्छति।

नेपथ्ये। भो भो राजानः। कथमिह भवन्तः सर्वे गुरोः परिभवममुना नृशंसेन प्रयुक्तमत्रभवतो भारद्वाजस्योपेक्षन्ते।

अश्वत्थामा। आकर्ण्य शनैः शनैः शस्त्रं स्पृशन्। किं गुरोर्भारद्वाजस्य परिभवः।

पुनर्नेपथ्ये।

आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोका-
द्द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य।
मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं
धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥ ७३ ॥

अश्वत्थामा। सक्रोधं सकम्पं च कर्णकृपौ दृष्ट्वा। किं नामेदम्।

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां
प्रायोपवेशसदृशं शममास्थितस्य।
तातस्य मे पलितमौलिनिरस्तकाशे
व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥ ७४ ॥

कृपः। वत्स। एवं किल जनः कथयति।

अश्वत्थामा। किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः।

सूतः। (सभयम्) कुमार। आसीदयं तस्य तेजोराशेर्दैवस्य नवावतारः परिभवस्य।

अश्वत्थामा। हा तात हा पुत्रप्रिय। मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः। अथवा।

परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्।
स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवायं पादः शिरसि निहितस्तस्य न करः ॥ ३५ ॥

आः दुरात्मन्पाञ्चालापसद।

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥ ३६ ॥

युधिष्ठिर युधिष्ठिर। अजातशत्रो। अमिथ्यावादिन्धर्मपुत्र। सानुजस्य ते किमनेनापकृतम्। अथवा किमनेनालीकप्रकृतिजिह्मचेतसा। अर्जुन सात्यके बाहुशालिन्वृकोदर माधव। युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेक्षितुम्। अथवा सर्व एवैते पातकिनः किमेतैः।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-

मयमस्त्रमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ७७ ॥

कृपः। वत्स न किंचिन्न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति।

अश्वत्थामा। भो भोः पाण्डवमत्स्यसोमकमागधेयाः क्षत्रियापसदाः।

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम्।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे ॥ ७८ ॥

सूत। गच्छ त्वं सर्वोपकरणैः सांग्रामिकैः सर्वायुधैरुपेतं महाहवलक्षणं नामास्मत्स्यन्दनमुपनय।

सूतः। यदाज्ञापयति कुमारः। इति निष्क्रान्तः।

कृपः। वत्स। अवश्यप्रतिकर्तव्ये ऽस्मिन्दारुणे परिभवाग्नौ सर्वेषामस्माकं को ऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम्।

अश्वत्थामा। किमतः परम्।

कृपः। सैनापत्ये ऽभिषिक्तमत्रभवन्तमिच्छामि समरभुवमवतारयितुम्।

अश्वत्थामा। मातुल परतन्त्रमिदमकिंचित्करं च।

कृपः। वत्स न खलु परतन्त्रं नाकिंचित्करं च। पश्य।

भवेद्भीष्मद्रोणं हि धृतराष्ट्रबलं कथम्।
यदि तत्तुल्यकक्षो ऽत्र भवान्धुर्यो न युज्यते ॥ ७९ ॥

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं किं पुनर्युधिष्ठिरबलम्। तदेवं च मन्ये परिकल्पिताभिषेकोपकरणः कौरवराजो न चिरात्त्वामेवाभ्युपेक्षमाणस्तिष्ठतीति।

अश्वत्थामा। यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्र-

तीकारजलावगाहनाय। तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सेना-
पत्यस्वयंग्रहणप्रणयसमाश्वासनया मन्दसंतापं करोमि।

कृपः। वत्स। एवमिदम्। अतस्तमेवोद्देशं गच्छावः। इति परिक्रामतः।

ततः प्रविशतः कर्णदुर्योधनौ।

दुर्योधनः। अङ्गराज।

तेजस्वी रिपुहतबन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम्।
आचार्यः सुतनिधनं निशम्य संख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत्॥ ८०॥

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति। यतः शोकान्धचेतसा तेन
विमुच्य क्षत्रधर्मकार्कश्यं द्विजातिसुलभो मार्दवपरिग्रहः कृतः।

कर्णः। राजन्कौरवेश्वर। न खल्विदमेवम्।

दुर्योधनः। कथं तर्हि।

कर्णः। एवं किल तस्याभिप्राय आसीत्। यथाश्वत्थामा मया पृथि-
वीराज्ये ऽभिषेक्तव्य इति तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्र-
हणमिति तथा कृतवान्।

दुर्योधनः। सशिरःकम्पम्। एवमिदम्।

कर्णः। एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासंग्रामस्य राजकस्य
परस्परक्षयमुपेक्षमाणेन तेन प्रधानपुरुषवध उपेक्षा कृता।

दुर्योधनः। उपपन्नमिदम्।

कर्णः। अन्यच्च राजन्। द्रुपदेन चास्य बाल्यात्प्रभृत्यभिप्रायवेदिना न
स्वराष्ट्रे वासो दत्तः।

दुर्योधनः। साध्वङ्गराज निपुणमभिहितम्।

कर्णः। न चायं ममैकस्याभिप्रायः। अन्ये ऽभियुक्ता अपि नैवेदमन्यथा मन्यन्ते।

दुर्योधनः। एवमेतत्। कः संदेहः।

दत्त्वाभयं सो ऽतिरथो वध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ ८१ ॥

कृपः। विलोक्य। वत्स। एष दुर्योधनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति। तदुपसर्पावः। तथा कृत्वा।

उभौ। विजयतां कौरवेश्वरः।

दुर्योधनः। दृष्ट्वा। अये कथं कृपो ऽश्वत्थामा च। आसनादुत्थाय। गुरो ऽभिवादये। अश्वत्थामानं प्रति। आचार्यपुत्र।

एष्वस्मदर्थकृततात परिघट्टनास्व
कालेरिदं मम निरन्तरमङ्गमङ्गैः।
स्पर्शस्तवैष भुजयोः सदृशः पितुस्ते
शोके ऽपि नो विकृतिमेति तनूरुहेषु ॥ ८२ ॥

पार्श्वे पुत्र पार्श्वे उपवेशयति। अश्वत्थामा बाष्पमुत्सृजति।

कर्णः। द्रौणायने। अलमलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम्।

दुर्योधनः। आचार्यपुत्र को विशेष आवयोरस्मिन्व्यसनार्णवे। पश्य।

तातस्तव प्रणयवान्स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ८३ ॥

कृपः। वत्स यथाह कुरुपतिस्तथैव तत्।

कर्णः। किमत्र विचारितेन।

अश्वत्थामा। राजन्नेवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्तुम्। किं तु।

मयि जीवति यत्तातः केशग्रहणमाप्तवान्।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम्॥ ८४॥

कर्णः। द्रौणायने किं क्रियते यदा तेनैव सर्वपरिभवत्राणहेतुना शस्त्रमुत्सृजता तादृशीमवस्थामात्मा नीतः।

अश्वत्थामा। अङ्गराज किमाह भवान्। किं क्रियत इति। श्रूयतां यत्क्रियते।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुबलः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥ ८५॥

अपि च। भो जामदग्न्यशिष्य कर्ण।

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः॥ ८६॥

दुर्योधनः। आचार्यपुत्र तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम्।

कृपः। राजन्सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः। तदहमेव मन्ये। भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः किं पुनर्युधिष्ठिरबलम्। अतोऽभिषिच्यतां सेनापत्ये।

दुर्योधनः। सुष्ठु युज्यमानमभिहितं युष्माभिः। किं तु प्राक्प्रतिपन्नो

कर्णः। न चायं ममैकस्याभिप्रायः। अन्ये ऽभियुक्ता अपि नैवेदमन्यथा मन्यन्ते।

दुर्योधनः। एवमेतत्। कः संदेहः।

दत्वाभयं सो ऽतिरथो वध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ ८१ ॥

कृपः। विलोक्य। वत्स। एष दुर्योधनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति। तदुपसर्पावः। तथा कृत्वा।

उभौ। विजयतां कौरवेश्वरः।

दुर्योधनः। दृष्ट्वा। अये कथं कृपो ऽश्वत्थामा च। आसनादवतीर्य। गुरो ऽभिवादये। अश्वत्थामानं प्रति। आचार्यपुत्र।

एह्यस्मदर्थहततात परिष्वजस्व
कालैरिद मम निरन्तरमङ्गमङ्गैः।
स्पर्शस्तवैष भुजयोः सदृशः पितुस्ते
शोके ऽपि नो विकृतिमेति तनूरुहेषु ॥ ८२ ॥

आलिङ्ग्य पार्श्वे उपवेशयति। अश्वत्थामा बाष्पमुत्सृजति।

कर्णः। द्रौणायने। अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम्।

दुर्योधनः। आचार्यपुत्र को विशेष आवयोरस्मिन्व्यसनार्णवे। पश्य।

तातस्तव प्रणयवान्स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ८३ ॥

कृपः। वत्स यथाह कुरुपतिस्तथैव तत्।

कर्णः। किमत्र विचारेण।

अश्वत्थामा। राजन्नेवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्तुम्। किं तु।

मयि जीवति यत्तातः केशग्रहणमाप्तवान्।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम्॥ ८४॥

कर्णः। द्रौणायने किं क्रियते यदा तेनैव सर्वपरिभवत्राणहेतुना शस्त्रमुत्सृजता तादृशीमवस्थामात्मा नीतः।

अश्वत्थामा। अङ्गराज किमाह भवान्। किं क्रियत इति। श्रूयतां यत्क्रियते।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुबलः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥ ८५॥

अपि च। भो जामदग्न्यशिष्य कर्ण।

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः॥ ८६॥

दुर्योधनः। आचार्यपुत्र तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम्।

कृपः। राजन्सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभारः। तदहमेवं मन्ये। भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः किं पुनर्युधिष्ठिरबलम्। अतोऽभिषिच्यतां सैनापत्ये।

दुर्योधनः। सुष्ठु युज्यमानमभिहितं युष्माभिः। किं तु प्राक्प्रतिपन्नो

ऽयमर्थो ऽङ्गराजस्य।

कृपः। राजन्नसदृशपरिभवशोकसागरे निमज्जतमेनमङ्गराजस्यार्थे नैवोपेक्षितु युक्तम्। अस्यापि च तदेवारिकुलमनुशासनीयम्। अतः किमस्य पीडा न भविष्यति।

अश्वत्थामा। राजन्कौरवेश्वर किमद्यापि युक्तायुक्तविचारणया।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम्।
इयं परिसमाप्यते रणकथाद्य दोःशालिना-
मपैतु नृपकाननातिगुरुरद्य भारो भुवः॥ ८७॥

कर्णः। वक्तुं सुकरमिदमध्यवसितु दुष्करम्। बहवः कौरवबले ऽस्य कर्मणः शक्ताः।

अश्वत्थामा। अङ्गराज। एवं बहवः कौरवबले शक्ताः। किं तु दुःखोपहतः शोकावेगवशाद्ब्रवीमि न पुनर्वीरजनाधिक्षेपेण।

कर्णः। मूढ दुःखितस्याश्रुपातः कुपितस्य चायुधद्वितीयस्य संग्रामावतरणमुचितं नैवंविधाः प्रलापाः।

अश्वत्थामा। सक्रोधम्। अरे रे राधागर्भभारभूत सूतापसद। किमेवमाक्षिपसि।

कर्णः।

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्।
दैवायत्तं कुले जन्म मदायत्तं हि पौरुषम्॥ ८८॥

अश्वत्थामा। किमाह भवान्। ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण। पश्य।

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं

संप्रत्येव भयाद्विहाय समरं प्राप्तो ऽस्मि किं त्वं यथा।
जातो ऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण किम्॥ ८९॥

कर्णः। सक्रोधम्। अरे रे वाचाट वृथाशस्त्रग्रहणदुर्विदग्धवटो।
निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम्।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना॥ ९०॥

अश्वत्थामा। सक्रोधम्। अरे रथकारकुलकलङ्क राधागर्भभारभूत। आयुधानभिज्ञ। तातमप्यधिक्षिपसि। अथवा।
स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क्व नु तदा॥ ९१॥

कर्णः। विहस्य। एवं भीरुरहं त्वं पुनर्विक्रमैकरसः। तव पितरमनुस्मृत्य महान्मे संशयो जातः। अपि च। अरे मूढ।
यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान्।
यदनेन मौलिदलने ऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसंनिधौ॥ ९२॥

अश्वत्थामा। सक्रोधं सकम्पं च। दुरात्मन्राजवल्लभप्रगल्भ सूतापसद। असंबद्धप्रलापिन्।
कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पाध्मायमानस्य वामः

शिरसि चरणा एव न्यस्यते वारयैनम् ॥ १३ ॥

इति तथा कर्तुमुत्तिष्ठति।

कृपदुर्योधनौ। गुरुपुत्र मर्षय मर्षय। इति निवारयत । अश्वत्थामा चरणप्रहारं नाटयति।

कर्णः। सक्रोधमुत्थाय खड्गमाकृष्य। अरे दुरात्मन्ब्रह्मबन्धो। आत्मश्लाघ।

ज्ञात्या काममवध्यो ऽसि चरणं त्विममुद्धृतम्।

अनेन लूनं खड्गेन पतितं वेत्स्यसि क्षितौ ॥ १४ ॥

अश्वत्थामा। अरे मूढ किं नाम ज्ञात्या काममवध्यो ऽहम्। इयं सा ज्ञातिस्त्यक्ता।

अद्य मिथ्याप्रतिज्ञो ऽसौ किरीटी क्रियते ऽधुना।

शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥ १५ ॥

उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ। कृपदुर्योधनौ निवारयत ।

दुर्योधनः। सखे। आचार्यपुत्र शस्त्रग्रहणेनालम्।

कृपः। वत्स सूतपुत्र शस्त्रग्रहणेनालम्।

अश्वत्थामा। मातुल मातुल किं वारयसि। अयमपि तातनिन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव।

कर्णः। राजन्न खल्वयं निवारयितव्यः।

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया।

अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥ १६ ॥

अश्वत्थामा। राजन्मुञ्च मुञ्चैनमासादयतु मद्भुजान्तरनिष्पेषसुलभमसूनामवसादनम्। अन्यच्च राजन्। स्नेहेन कार्पण्येन वा त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि वृथैव ते। पश्य

पापप्रियस्तव कथं गुणिनः सहायः

सूतात्मजः शशधरान्वयसंभवस्य।

हत्वा किरीटिनमहं नृप मुञ्च कुर्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥ १७ ॥

¹ प्रहर्तुमिच्छति ।

कर्णः । खड्गमुद्यम्य । अरे वाचाट ब्राह्मणाधम । अयं न भवसि । राजन्मुञ्च मुञ्च न खल्वहं वारयितव्यः । हन्तुमिच्छति । अभी निवारयत ।

दुर्योधनः । कर्ण गुरुपुत्र को ऽयमद्य युवयोर्व्यामोहः ।

कृपः । वत्स । अन्यदेव प्रस्तुतमन्यत्रावेग इति को ऽयं व्यामोहः स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः ।

अश्वत्थामा । मातुल न लभ्यते ऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः सादयितुम् ।

कृपः । वत्स । अकालः खलु स्वबलप्रधानविरोधस्य ।

अश्वत्थामा । मातुल यद्येवम् ।

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।
बलानां नाथे ऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखममुं वेत्तु समरे ॥ १८ ॥

इति खड्गमुत्सृजति ।

कर्णः । विहस्य । अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात् ।

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ १९ ॥

नेपथ्ये । आः दुरात्मन्द्रौपदीकेशाम्बराकर्षण महापातकिन्धार्तराष्ट्राप-

सद्। चिरस्य खलु कालस्य मत्संमुखीनमागतो ऽसि। क्षुद्रपशो क्वेदानीं गम्यते। अपि च। भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः। शृण्वन्तु भवन्तः।

स्पृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवा-
न्सो ऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः॥१००॥

सर्वे श्राक्पायन्ति।

अश्वत्थामा। अङ्गराज सेनापते जामदग्न्यशिष्य द्रोणोपहासिन्भुजबलपरिरक्षितसकललोक। धृतायुध इति पठित्वा। इदं तदासन्नतरमेव संवृत्तं रक्षैनं सांप्रतं भीमाद्दुःशासनम्।

कर्णः। आः शक्तिरस्ति वृकोदरस्य मयि जीवति युवराजस्य छायामप्याक्रमितुम्। युवराज न भेतव्यं न भेतव्यमयमहमागतो ऽस्मि। इति निष्क्रान्तः।

अश्वत्थामा। राजन्कौरवनाथ। अभीष्मद्रोणं संप्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम्। अतः स्वयमेव भ्रातुः प्रतीकारपरो भव।

दुर्योधनः। आः शक्तिरस्ति दुरात्मनः पवनतनयस्यान्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य छायामप्याक्रमितुम्। वत्स न भेतव्यं न भेतव्यम्। कः को ऽत्र भोः। रथमुपनय। इति निष्क्रान्तः।

नेपथ्ये कलकलः।

अश्वत्थामा। अग्रतो विलोक्य। मातुल हा धिक्कष्टम्। एष खलु भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैर्दुर्वारैरभिद्रवति।

हा कष्टं हा कष्टं सर्वथा पीतं दुःशासनशोणितं भीमेन। न खलु विषेहे दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम्। अनृतमनुमतं नाम। मातुल। शस्त्रं शस्त्रम्।

सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरको ऽस्तु मे।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥१०१॥

इति खड्गं ग्रहीतुमिच्छति।

नेपथ्ये। महात्मन्भारद्वाजसूनो न खलु सत्यवचनमनुच्छाद्तिपूर्वमुच्छादयितुमर्हसि।

कृपः। वत्स। अशरीरिणी वाणी भवन्तमनतादभिरक्षति।

अश्वत्थामा। कथमियममानुषी वाग्नानुमनुते संग्रामावतरणम्। भोः कष्टम्। आः पक्षपातिनो देवा अपि पाण्डवानाम्। सर्वथा पीतं दुःशासनशोणितं भीमेन। भोः कष्टम्।

दुःशासनस्य रुधिरे पीयमाने ऽप्युदासितम्।
दुर्योधनस्य कर्तास्मि किमन्यत्प्रियमाहवे ॥१०२॥

मातुल राधेयक्रोधवशादनार्यमस्माभिराचरितम्। ततस्त्वमपि तावदस्य राज्ञः पार्श्ववर्ती भव।

कृपः। गच्छाम्यहमत्र प्रतिविधातुं भवानपि शिविरसंनिवेशमेव प्रतिष्ठताम्।

परिक्रम्य निष्क्रान्तौ।

॥इति तृतीयो ऽङ्कः॥

तत प्रविशति प्रहारमूर्छित रथस्थ दुर्योधनमपहरन्सूत ।

सूत ससम्भ्रम परिक्रामति।

नेपथ्ये। भो बाहुबलावलेपप्रवर्तितमहासमरदोहदाः कौरवपक्षपातपणीकृतप्राणद्रविणसचया नरपतयः सस्तम्भ्यन्तां संस्तभ्यन्तां कृतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनविषादपरिस्खलत्प्रहरणानि रणाद्द्रवन्ति बलानि।

सूतः। विलोक्य। कथमेष धवलचपलचामरचुम्बितकनककमण्डलुना शिखरावबद्धवैजयन्तीसूचितेन कृतगजवाजिनरकलेवरसहस्रसंमर्दविषमोद्धातकतकलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरबलपराक्रमप्रसरः प्रद्रुतमात्मबलमाश्वासयन्कृपः किरीटिनाभियुक्तमङ्गराजमनुसरति। कृत ज्ञातमस्मद्बलानामवलम्बनम्।

नेपथ्ये कलकलानन्तर

भीमसेनः। भो भो अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधाः। न भेतव्यं न भेतव्यम्। अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो रभसगामी स्तोकावशिष्टप्रतिज्ञामहोत्सवः कौरवराजस्य द्यूतनिर्जितो दासः पार्थमध्यमो भीमसेनः सर्वान्भवतः साक्षीकरोमि। श्रूयताम्।

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य च तथा कर्णस्य शल्यस्य च।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥१०३॥

सूतः॥ श्रुत्वा सभयम्। अये आसन्न एव दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिः। अनुपलब्धसंज्ञश्च तावदत्र महाराजः। भवतु सुदूरमपहरामि स्यन्दनम्। कदाचिद्दुःशासन इवास्मिन्नप्यनार्यो ऽनार्यमाचरिष्यति। त्वरिततरं परिक्रम्यावलोक्य च। अये अयमसौ सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादपः। उचिता विश्रामभूरियं समरव्यापारखिन्नस्य वीरजनस्य। अत्रस्थो ऽयं मयोपवीजिततालवृन्तेन हरिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिना दशापरिणामयोग्येन सरसीसमीरणेन च विगतक्लमो भविष्यति महाराजः। लूनकेतुश्चायं रथो ऽनिवारित एव प्रवेदयति छायाम्। इति प्रवेश्य स्थापयित्वा। कः को ऽत्र। समन्तादवलोक्य। कथं न कश्चिदत्र परिजनः। नूनं तथाभूतस्य वृकोदरस्य दर्शनादेवंविधस्य च स्वामिनस्त्रासेन शिबिरसंनिवेशमेव प्रविष्टः। कष्टं भोः कष्टं भोः।

द्रोणेनाकृष्य पार्थादयमपि च न संरक्षितः सिन्धुराजः
क्रूरं दुःशासने ऽस्मिन्हरिण इव कृतं भीमसेनेन कर्म।
दुःसाध्यामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं दैवमेतावतापि ॥१०४॥

राजानमवलोक्य। कथमद्यापि न चेतनामुपलभते महाराजः। भोः कष्टम्।
निःश्वस्य।

मदकलितकरेणुभज्यमाने

विपिन इव प्रकटैकशालशेषे।
कृतसकलकुमारके कुले ऽस्मिं-
स्त्वमसि विधेरवलोकितः कटाक्षैः ॥१०५॥

ननु भो कृतविधे भरतकुलविमुख।

अक्षतस्य गदापाणेरनारूढस्य संशयम्।
एषापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया ॥१०६॥

दुर्योधनः। सधीरमुपलब्धसंज्ञः। आः शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञां पूरयितुम्। वत्स दुःशासन न भेतव्यं न भेतव्यम्। अयमहमागतो ऽस्मि। सूत प्रापय रथं तमुद्देशं यत्र वत्सं द्रक्ष्यामि।

सूतः। आयुष्मन्नक्षमाः संप्रति वाहास्ते रथमुद्वोढुम्। अपवार्य। मनोरथं च।

दुर्योधनः। रथादवतीर्य सगर्वं साकूतं च। किं स्यन्दनगमनकालातिपातेन।

सूतः। पदैलक्ष्यं सकरुणम्। मर्षयत्वायुष्मान्।

दुर्योधनः। धिक्सूत किं रथेन। केवलमरातिविमर्दसंघट्टसंचारी दुर्योधनः खल्वहम्। तद्गदामात्रसहायः समरभुवमवतरामि।

सूतः। आयुष्मन्नेवमेतत्कः संदेहः।

दुर्योधनः। यद्येवं किमेवं भाषसे। पश्य।

आलस्य मे प्रकृतिदुर्ललितस्य पापः
पापं व्यवस्यति समक्षमुदायुधो ऽसौ।
अस्मिन्निवारयसि किं व्यवसायिनं मां
क्रोधो न नाम करुणा न च ते ऽस्ति लज्जा ॥१०७॥

सूतः। सकरुणं पादयोर्निपत्य। एतद्विज्ञापयामि। आयुष्मन्संपूर्णप्रतिज्ञेन भवि-

त्वं वृकोदरहतकेन। यत एवं ब्रवीमि।

दुर्योधनः। सहसा भूमौ पतन्। हा वत्स दुःशासन हा मदाज्ञाविरोधितपाण्डव हा विक्रमैकरस हा मदङ्कदुर्ललित हा अरातिकुलगजघटामृगेन्द्र हा युवराज। क्वासि। देहि मे प्रतिवचनम्। इति निश्वस्य मोहमुपगतः।

सूतः। राजन्समाश्वसिहि समाश्वसिहि।

दुर्योधनः। संज्ञां लब्ध्वा निश्वस्य।

मुक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितो ऽपि हि मया न वृथाग्रजेन।
अस्यास्तु वत्स तव हेतुरहं विपत्ते-
र्यत्कारितो ऽस्यविनयं न च रक्षितो ऽसि ॥१०८॥

इति पतति।

सूतः। आयुष्मन्समाश्वसिहि समाश्वसिहि।

दुर्योधनः। धिक्सूत किमनुष्ठितं भवता।

रक्षणीयेन सततं बालेनाज्ञानुवर्तिना।
दुःशासनेन भ्रात्राहमुपहारेण रक्षितः ॥१०९॥

सूतः। महाराज मर्मभेदिभिरिषुतोमरशक्तिप्रासवर्षैर्महारथानामपहृतचेतनवान्निश्चेतनः कृतो महाराज इत्यपहृतो मया रथः।

दुर्योधनः। सूत विरूपं कृतवानसि।

तस्यैव पाण्डवपशोरनुजद्विषो मे
नादैर्गदाशनिकृतैर्न विबोधितो ऽस्मि।
अद्यैव नाधिशयितो रुधिरार्द्रशय्यां
दौःशासनीं यदहमाशु वृकोदरो वा ॥११०॥

निःश्वस्य नभो विलोक्य। ननु भो हतविधे कृपाविरहित भरतकुलविमुख।

अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः।

सूतः। शान्तं पापं शान्तं पापं महाराज किमिदम्।

दुर्योधनः।

घातिताशेषबन्धोर्मे किं राज्येन जयेन वा ॥१११॥

ततः प्रविशति पुरुषः

पुरुषः। अज्जा अवि णाम इमस्सिं उद्देसे सारहिदुदीओ दिट्ठो तुम्हेहिं महाराअदुज्जोहणो ण वेत्ति। कहं ण को वि मन्तेदि। होदु एदाणं बहुपरिग्गहाणं पुरिसाणं समूहो दीसइ त्ति एत्थ गदुअ पुच्छिस्सं। विलोक्य। कहं एदे सस्सामिणो गाढप्पहाराहदस्स घणसंणाहज्जालदुब्भेज्जमुहेहिं कङ्कवत्तेहिं हिअआदो सल्लाइं उद्धरन्ति ता ण एदे ण जाणन्ति। होदु अण्णदो विचिणइस्सं। इमे क्खु अवरे पञ्जरदरा संकलिदा वीरमाणुसा। एत्थ गदुअ पुच्छिस्सं। उपगम्य। हंहो जाणाह कस्सिं उद्देसे कुरुणाहो वट्टइ त्ति। कहं एदे वि मं देक्खिअ अहिअदरं रोअन्ति। दृष्ट्वा। ता ण हु एदे वि जाणन्ति। हा इअं क्खु एत्थ वट्टइ। एसा वीरमादा समलविणिहदं पुत्तअं सुणिअ रत्तंसुअणिवसणाए बहूए सह अणुमरदि। सश्लाघम्। साहु वीरमादे साहु अण्णस्सिं वि जम्मन्तरे अणिहदपुत्तआ हविस्ससि। होदु अण्णदो विचिणइस्सं। अन्यतो विलोक्य। अअं अवरो बहुप्पहारणिहदकाओ अकिदवणप्पडीआरो एव्व जोहसमूहो चिट्ठइ। इमं सुणासणं तुलंगमं उवालहिअ रोदि। णूणं एदाणं एत्थ एव्व सामी वावादिदो त्ति। ता ण हु एदे वि जाणन्ति। होदु अण्णदो गदुअ पुच्छिस्सं। सर्वतो विलोक्य। कहं सव्वो एव्व अवत्थाणुरूवं विसण्णं अणुहवन्तो भाअधेअविमुहदाए पज्जाउलो जणो ता कं

एत्थ पुच्छिस्सं कं वा उवालहिस्सं। भोदु सव्वं एव्व एत्थ विआणिस्सं। परिक्रम्य। देव्वं एव्व दाणिं उवालहिस्सं। हंहो देव्व एआदसाणं अक्खोहिणीणं णाहो जेट्ठो भादुसअस्स भत्ता गङ्गेअद्दोणअङ्गराअसल्लकिवकिदवम्मअस्सत्थामप्पमुहस्स राअचक्कस्स सअलपुहवीमण्डलेक्कणाहो महाराअदुज्जोहणो वि अणेसीअदि ण जाणे कस्सिं उद्देसे सो वट्टइ त्ति। विचिन्त्य निःश्वस्य च। अहवा किं एत्थ देव्वं उवालहामि। तस्स क्खु एअं णिब्भच्छिअविदुरवअणबीअस्स परिभूदपिदामहहिदोवदेसङ्कुरस्स सउणिप्पोच्छाहणादिविरूढमूलस्स जदुगेहजूदविससाहिणो संभूदचिरआलसंवड्ढवेरालवालस्स पञ्चालिआकेसग्गहणकुसुमस्स फलं परिणमदि। अन्यतो विलोक्य। जहा एत्थ एसो विविहरअणप्पहासंवलिदसूरकिरणप्पसूदसक्कचावसहस्ससंपूरिददसदिसामुहो लूणकेदुवंसो रहो दीसइ। ता अहं तक्केमि अवस्सं एदिणा महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वं। उपसृत्य दृष्ट्वा च। जेदु जेदु महाराओ।

सूतः। विलोक्य। आयुष्मन्समरात्सुन्दरकः प्राप्तः।

राजा। विलोक्य। अये सुन्दरक कच्चित्कुशलमङ्गराजस्य।

सुन्दरकः। देव कुसलं सरीरमेत्तेण।

राजा। ससंभ्रमम्। सुन्दरक किं किरीटिनास्य निहता धौरेयकाः। हतः सारथिः। भग्नो वा रथः।

सुन्दरकः। देव ण रहो भग्गो से मणोरहो वि।

राजा। किमेवमविस्पष्टकथितैराकुलमपि मे मनः पर्याकुलयसि। तदशेषतो विस्पष्टं कथ्यताम्।

सुन्दरकः। जं देवो आणवेदि त्ति। अह देवस्स णअणाणप्पहावेण अवणीदा मे रणप्पहारवेअणा। इति नाट्येन परिक्रम्य। सुणादु देवो। अत्थि

दाणिं कुमालदुस्सासणवध। इत्यर्धोक्ते गुलमावृणोति।

सूतः। सुन्दरक कथय कथितमेव देवेन।

राजा। कथ्यतां श्रुतमस्माभिः।

सुन्दरकः। सुणादु देवो। अन्तर दाव दुस्सासणवह्णामरिसिदेण सामिणा अङ्गराएण कुडिलभिउडीभङ्गभीसणालाठवट्ठेण अविणादसंधाणामोक्खेण सिलीमुहसंघादवरिसिणा अभिजुत्तो सो दुराआरो मज्झमपण्डवो भीमसेणहदओ।

उभौ। ततस्ततः।

सुन्दरकः। तदो देव उहअवलमिलन्तदिप्पन्तकरितुरअपदादिसमुद्भूतधूलिणिवहेण पल्लत्थतत्तगअघटासंघादेण अ वित्थरन्तेण अन्धआरेण अन्धीकदं उहअवलं ण भुवणतलं लक्खीअदि।

उभौ। ततस्ततः।

सुन्दरकः। तदो देव दूराअड्ढिअधणुग्गुणच्छोटणटंकारगम्भीरभीसणेण अन्धआरेण जाणीअदि गज्जिदं पलअजलहरेणेत्ति।

दुर्योधनः। ततस्ततः।

सुन्दरकः। तदो अ दोह्णिं ताणं अण्णोण्णसिंहणादगज्जिदपिसुणं विविहपरिमुक्कप्पहरणाहदकवअसंजलिदज्जलणविज्जुअं वहललुहिलविन्दुखज्जोअभासुर गभीरत्थणिअचापजलहरप्पसरिदसरधारासहस्सवरिसदुद्दंसणं संभूतं समरदुद्दिणं।

दुर्योधनः। ततस्ततः।

सुन्दरकः। तदो अ देव एदस्सिं अन्तरे जेट्ठस्स भादुणो पराभवसङ्किणा धणंजयेण वज्जणिग्घादणिग्घोसविसमरसिदरहसिहरट्ठिदवाणरो तुरंगमसंवाहणवावुडलवासुदेवसङ्कचक्कगदासिलञ्छिअचदुलचउव्वाहु-

दण्डडुड्डंसणो आपूरिदपञ्चजण्णदेवदत्ततारररसिअप्पडिरवभरिददसदिसामुहकुहरो धाविदो तं उद्देसं रहवरो।

दुर्योधनः। ततस्ततः।

सुन्दरकः। तदो भीमसेणधणंजयेहिं अभिजुत्तं पिदरं पेक्खिअ ससंभमविअलिअं अवधूणिअ रअणसीसअं आअण्णाअड्ढिदकठिणकोअण्डजीओ दाहिणहत्थक्खित्तसरपुङ्खबन्धणो विघट्टणतुअराविदसारहीओ तं देसं उवगदो कुमालविससेणो।

दुर्योधनः। सावष्टम्भम्। ततस्ततः।

सुन्दरकः। तदो अ तेण देव आअच्छन्तेण एव्व कुमालविससेणेण विदलिदासिलदासामलसिणिद्धपुङ्खेहिं कठिणकङ्कवत्तेहिं कसणवअणेहिं सिलाणिसिदसामलसल्लवन्धेहिं कुसुमिदो विअ तरू मुहुत्तएण सिलीमुहेहिं पच्छादिदो धणंजअस्स रहवरो।

उभौ। सहर्षम्। ततस्ततः।

सुन्दरकः। तदो देव तिक्खविकिरन्तणिसिदभल्लवरिसिणा धणंजयेण ईसि विहसिअ भणिदं। अरे रे विसमेण पिदुणो वि दाव ण दे मह अभिमुहं ठादुं जुत्तं अह किं उण भवदो बालस्स। ता गच्छ अवरेहिं कुमारकेहिं आओधेहि त्ति। एव्व अ णिसमिअ गुरुअणाहिक्खेवेण उद्दीविअकोवोवरत्तमुहमण्डलविअम्भिअभीमभिउडीभङ्गभीसणेण चावधारिणा कुमालविससेणेण वि मम्मभेदएहिं फरुसविसमेहिं सुदिवहकदप्पणएहिं णिब्भच्छिदो गण्डीवी वाणेहिं ण उण दुट्ठवअणेहिं।

राजा। साधु वृषसेन साधु साधु। ततस्ततः।

सुन्दरकः। तदो अ देव सिदसरामिघादवेअणापज्जाअमणुणा गण्डीविणा चण्डगण्डीअजीआसद्दणिद्धिदवञ्जणिग्घादघोसेण वाणणिवड-

णप्पडिसिद्धदंसणप्पसरेण पत्थुदं सिक्खावलाणुरूवं किं वि अच्चलिअं।

दुर्योधनः। साकूतम्। ततस्ततः।

सुन्दरकः। तदो अ देव तं च पेक्खिअ तस्स सत्तुणो समरव्वावार-चउरत्तणं अविभाविदतूणीमुहधणुग्गुणागमणसरसंधाणमोक्खचडुलक-रअलेण कुमालविससेणेण वि सविसेसं पत्थुदं समलकम्म।

दुर्योधनः। ततस्ततः।

सुन्दरकः। तदो अ देव परिसेसिदरणव्वावारो विमुक्कचिरणिबद्धिअ-वेराणुबन्धो दोण्णं वि कुरुराअपण्डवबलेसु साहु विससेण साहु त्ति कलकलमुहरो वीरलोओ आलोइदुं पउत्तो।

दुर्योधनः। सविस्मयम्। ततस्ततः।

सुन्दरकः। तदो अ देव अवहीरिअसअलधाणुक्कचक्कपरक्कमसालिणो सुदस्स तधाविहेण समलकम्मारम्भेण हरिसरोसकरुणासङ्कासंकडे अ-णुवट्टमाणस्स सामिणो अङ्गराअस्स णिपडिदा सरपद्धई भीमसेणे वप्फ-आउला दिट्ठी कुमालविससेणे।

दुर्योधनः। सविस्मयम्। ततस्ततः।

सुन्दरकः। तदो अ देव उहअबलप्पउत्तसाहुक्कारामरिसिदेण सर-वरिसप्पज्जलिदेण गण्डीविणा तुरएसु सारहिं पि रहवरे धणुं पि जी-आइं पि णलिन्दलञ्छणे सिदादवत्ते वावारिदा समं सिलीमुहा।

दुर्योधनः। सभयम्। ततस्ततः।

सुन्दरकः। तदो देव विरहो लूणगुणकोदण्डओ परिब्भमणमेत्तव्वा-वारप्पडिसिद्धसरसंपादो मण्डलाइं विरइदुं पउत्तो कुमालो।

दुर्योधनः। साशङ्कम्। ततस्ततः।

सुन्दरकः। तदो अ देव सुदरहविद्धंसणामरिसुद्दीविदेण सामिणा

अङ्गराएण अगणिअभीमसेणाभिओएण पत्थुदो धणंजअस्स उवरि सि-
लीमुहासारओ। कुमालविससेणो वि परिअणोवणीदं अणं रहं आ-
रुहिअ पुणो वि संवुत्तो धणंजआभिओए। भणिदं च कुमालेण। रे रे
तादाहिक्खेवमुहर मज्झमपण्डव। मह सरा तुह सरीरं उज्झिअ अण-
स्सिं ण णिवडन्ति त्ति भणिअ सरसहस्सेहिं पण्डवसरीरं पच्छाइअ
सिंहणादेण गज्जिदुं पउत्तो।

दुर्योधनः। सविस्मयम्। अहो बालस्य पराक्रमो मुग्धस्वभावे ऽपि।
ततस्ततः।

सुन्दरकः। तदो अ देव तस्स सरसहस्ससंपादं अवधुणिअ किरी-
टिणा गहिदा रुउच्छङ्गादो कणन्तकणअकिङ्किणीजालझंकारविराइणी
मेहोवरोहविमुक्कणहत्थलणिम्मला णिसिदसामलसिणिद्धमुही वि-
विहरअणप्पहाभासुरभीसणरमणीअदंसणा सत्ती सोवहासं विमुक्का
धणंजएण कुमालाभिमुहं।

दुर्योधनः। सविषादम्। अहह। ततस्ततः।

सुन्दरकः। तदो अ देव पज्जलन्तिं सत्तिं पेक्खिअ विअलिअं अङ्ग-
राअस्स हत्थादो ससर धणु हिअआदो वीरसुलहो उच्छाहो णअणा-
दो वप्फसलिलं वअणादो हसिदं हसिद अ धणंजएण सिंहणादं वि-
णादिदं विओदलेण अ दुकूलं दुकूलं त्ति अक्कन्दिद कुरुवलेण।

दुर्योधनः। सविषादम्। ततस्ततः।

सुन्दरकः। तदो अ देव कुमालविससेणेण आअणाकरिसिदणिसि-
दखुरप्पेण सुचिरं णिब्भच्छिअ अद्धपहे एव्व भाइरही विअ भअवदा
विसमलोअणेण तिधा किदा सत्ती।

दुर्योधनः। साधु वृषसेन साधु। ततस्ततः।

णप्पडिसिद्धदंसणप्पसरेण पत्थुदं सिक्खावलाणुरूवं कि वि अच्चलिअं।

दुर्योधनः। साकूतम्। ततस्ततः।

सुन्दरकः। तदो अ देव तं च पेक्खिअ तस्स सत्तुणो समरवावार-चउरत्तणं अविभाविदत्तणीमुद्धधणुग्गुणागमणसरसधाणामोक्खचदुलकर-अलेण कुमालविससेणेण वि सविसेस पत्थुद समलकम्म।

दुर्योधनः। ततस्ततः।

सुन्दरकः। तदो अ देव परिसेसिदरणवावारो विमुक्कचिरणिबद्धिअ-वेराणुबन्धो दोणं वि कुरुराअपण्डवबलेसु साहु विससेण साहु त्ति कलकलमुहरो वीरलोओ आलोइदु पउत्तो।

दुर्योधनः। सविस्मयम्। ततस्ततः।

सुन्दरकः। तदो अ देव अवहीरिअसअलधाणुक्कचक्कपरक्कमसालिणो सुदस्स तधाविहेण समलकम्मारम्भेण हरिसरोसकरुणासङ्कासंकडे अ-णुवहमाणस्स सामिणो अङ्गराअस्स णिपडिदा सरपहई भीमसेणे वप्फ-आउला दिट्ठी कुमालविससेणे।

दुर्योधनः। सविस्मयम्। ततस्ततः।

सुन्दरकः। तदो अ देव उद्धअबलप्पउत्तसाहुकारामरिसिदेण सर-वरिसप्पज्जलिदेण गण्डीविणा तुरएसु सारहि पि रहवरे धणुं पि जीआइ पि णलिन्दलञ्छणे सिदादवत्ते वावारिदा सम सिलीमुहा।

दुर्योधनः। सभयम्। ततस्ततः।

सुन्दरकः। तदो देव विरहो लूणगुणकोदण्डओ परिब्भमणमेत्तवा-वारप्पडिसिद्धसरसंपादो मण्डलाइं विरइदु पउत्तो कुमालो।

दुर्योधनः। साशङ्कम्। ततस्ततः।

सुन्दरकः। तदो अ देव सुदरहविहसणामरिसुद्दीविरण सामिणा

अङ्गराएण अगणिअभीमसेणाभिजोएण पत्थुदो धणंजअस्स उवरि सि-
लीमुहासारओ। कुमालविससेणो वि परिअणोवणीदं अणं रहं आ-
रुहिअ पुणो वि संवुत्तो धणंजआभिओए। भणिदं च कुमालेण। रे रे
तादाहिक्खेवमुहर मज्झमपण्डव। मह सरा तुह सरीरं उज्झिअ अण्ण-
स्सिं ण णिवडन्ति त्ति भणिअ सरसहस्सेहिं पण्डवसरीरं पच्छाइअ
सिंहणादेण गज्जिदुं पउत्तो।

दुर्योधनः। सविस्मयम्। अहो बालस्य पराक्रमो मुग्धस्वभावे ऽपि।
ततस्ततः।

सुन्दरकः। तदो अ देव तस्स सरसहस्ससंपादं अवधुणिअ किरी-
टिणा गहिदा रुऊच्छङ्गादो कणअकणअकिङ्किणीजालझंकारविराइणी
मेहोवरोहविमुक्कणहत्थलणिम्मला णिसिदसामलसिणिद्धमुही वि-
विहरअणप्पहाभासुरभीसणरमणीअदंसणा सत्ती सोवहासं विमुक्का
धणंजएण कुमालाभिमुहं।

दुर्योधनः। सविषादम्। अहह। ततस्ततः।

सुन्दरकः। तदो अ देव पज्जलन्तिं सत्तिं पेक्खिअ विअलिअं अङ्ग-
राअस्स हत्थादो ससरं धणु हिअआदो वीरसुलहो उच्छाहो णअणा-
दो वप्फसलिलं वअणादो रसिदं हसिदं अ धणंजएण सिंहणाद वि-
णादिदं विओदलेण अ दुकूलं दुकूलं त्ति अक्कन्दिदं कुरुबलेण।

दुर्योधनः। सविषादम्। ततस्ततः।

सुन्दरकः। तदो अ देव कुमालविससेणेण आअणाकरिसिदणिसि-
दखुरप्पेण सुचिरं णिब्भच्छिअ अद्धपहे एव्व भाइरही विअ भअवदी
विसमलोअणेण तिधा किदा सत्ती।

दुर्योधनः। साधु वृषसेन साधु। ततस्ततः।

सुन्दरकः। तदो एदस्सिं अन्तरे किदकलकलमुहरेण वीरलोअसाधुवादेण अन्तरिदो समरतूररवो सिद्धचालणगणविमुक्केण कुसुमप्पकरेण पच्छादिदं समलङ्गणं।

दुर्योधनः। अहो बालस्य पराक्रमः। ततस्ततः।

सुन्दरकः। तदो अ देव भणिदं सामिणा अङ्गराएण भो विओदल असमत्तो तुह मह वि समलवावारो ता अणुमण्णदु मं मुहुत्तअं पेक्खाम दाव वच्छस्स तुह भादुणो धणुव्वेदसिक्खाणिउणत्तणं तुह वि एदं पेक्खणीअं त्ति। तदो विरदाओ रणवावारणिव्वन्धादो मुहुत्तअं पमभिदवेरा जादा दुवे वि पेक्खआ भीमसेणङ्गराआ।

दुर्योधनः। साभिप्रायम्। ततस्ततः।

सुन्दरकः। तदो अ देव एदस्सिं अन्तरे सत्तिखण्डणामरिसिदेण गण्डीविणा एव्वं भणिदं। रे रे दुज्जोहणप्पमुहा। इत्यर्धोक्ते लज्जां नाटयति।

दुर्योधनः। सुन्दरक कथ्यतां परवचनमेतत्।

सुन्दरकः। सुणादु देवो। अरे दुज्जोहणप्पमुहा कुरुवलसेणापङ्गणआ। रे अविणअणाइकणधार कण्ण। तुम्हेहिं मह परोक्खं एआई पुत्तओ अहिमण्णू वावादिदो अहं उण तुम्हाणं पेक्खन्ताणं एदं कुमालविससेणं सुमरिदव्वसेसं करोमि त्ति भणिअ सगव्वं अप्फालिदं णेण णिग्घादघोसणिणादजीआरवं गण्डीवं सामिणा वि सज्जीकिदं कालपुट्ठं।

दुर्योधनः। सावहित्थम्। ततस्ततः।

सुन्दरकः। तदो अ एदस्सिं अन्तरे पडिसिद्धभीमसेणसमलकम्मारम्भेण गण्डीविणा विरइदा अङ्गराअविससेणरहकूलंकसाओ वाणणईओ। तार्हिं वि दुवेर्हिं अणेणासिणेहदंसिदसिक्खाविसेसेर्हिं अहिजुत्तो मल्लमण्डओ।

दुर्योधनः। ततस्ततः।

सुन्दरकः। तदो अ गण्डीविणा तारसिदजीआणिग्घोसमेत्तविणादवाणवरिसेण तह आरद्धिअं पत्तिदुं जह ण णहत्थलं ण सामी ण रहो ण धरणी ण कुमालो ण केदुवंसो ण वलाइ ण सारही ण तुलंगमा ण दिसाओ ण वीरलोओ अ संलक्खीअदि।

दुर्योधनः। सविस्मयम्। ततस्ततः।

सुन्दरकः। तदो अ देव खणमेत्तं एव्व अदिकुत्ते सरसंपादे सहरिससिंहणादे पण्डवसेणे विमुक्ककन्दे कोरवबले समुत्थिदो महन्तो कलअलो हा हदो कुमालो विससेणो त्ति।

दुर्योधनः। सबाष्परोषम्। ततस्ततः।

सुन्दरकः। तदो अ देव पेक्खामि कुमालं हदसारहितुलंगं लूणादवत्तचापचामरकेदुवंसं सग्गप्पब्भट्ठं विअ सुलकुमालं हिअअमम्मभेदिणा एक्केण सिलीमुहेण भिण्णदेहं रहमज्झे पल्लत्थं।

राजा। साश्रम्। अहह कुमारवृषसेन। अलमतःपरं श्रुत्वा। हा वत्स वृषसेन हा मदङ्कदुर्ललित हा मदाज्ञाकर हा गदायुद्धप्रियशिष्य हा शौर्यसागर हा राधेयकुलप्ररोह हा प्रियदर्शन हा दुःशासननिर्विशेष हा सर्वगुरुवत्सल। प्रयच्छ मे प्रतिवचनम्।

पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-
मुद्भिद्यमाननवयौवनरम्यशोभम्।
प्राणापचारपरिवर्तितदृष्टि दृष्टं
कर्णेन तत्कथमिवाननपङ्कजं ते ॥१९२॥

सूतः। आयुष्मन्नलमत्यन्तशोकावेगेन।

दुर्योधनः। सूत पुण्यवन्तो हि दुःखभाजो भवन्ति। अस्माकं पुनः

प्रत्यक्तं हतबन्धूनामेतत्परिभवाग्निना।
हृदयं दह्यते ऽत्यर्थं कुतो दुःखं कुतो व्यथा ॥११३॥

इति मोहमुपगतः ।

सूतः। समाश्वसितु समाश्वसितु। पटान्तेन वीजयति। आयुष्मन्नलमत्यन्तदुःखावेगेन।

दुर्योधनः। लब्धसंज्ञः। भद्र सुन्दरक वयस्येन किं प्रतिपन्नमङ्गराजेन।

सुन्दरकः। तदो देव तहहदस्स पुत्तस्स दंसणेण सगलिद अस्सुजलं उज्झिअ अणवेक्खिदपरप्पहरणेण सामिणा अङ्गराएण अभिजुत्तो धणंजओ। तदो तं च सुदवहामरिसिद विमुक्कजीविदासं तह परिक्कमन्तं पेक्खिअ भीमणउलसहदेवपञ्चालप्पमुहेहिं अन्तरिदो धणंजअस्स रहो।

दुर्योधनः। ततस्ततः।

सुन्दरकः। तदो अज्जुणचावमहुप्पलअपओहरणिस्सरिअसरधारासहस्सेहिं पूरिदेसु दिसामुहेसु सब्बेण भणिदो सामी अङ्गराओ। जह अङ्गराअ हदतुरंगमो मथिदचक्कणेमिक्कूबरो दे रहो ता ण जुत्तं भीमज्जुणेहिं अहिजुज्झिदुं त्ति भणिअ णिवत्तिदो रहो ओदारिओ सामी सन्दणादो वङ्कुप्पआर अ समस्सासिदो।

राजा। ततस्ततः।

सुन्दरकः। तदो अ सामिणा सुइरं विससम्भिअ परिअणो अभिहिदो अणं रह मे उवणेहि त्ति परिजणोवणीदं अण्ण रहं पेक्खिअ मंइ दिण्णदिट्ठी सुन्दर एहि त्ति भणिद अ। अह च उवगदो समीवं। तदो अवणीअ सीसट्ठाणादो पट्टिअं सरीरसंगलिदेहिं सोणिअबिन्दूहिं दिउवअणं बाणं कडुअ अभिलिहिदो एसो देवस्स सदेसो। इति पत्रिकामर्पयति

राजा। गृहीत्वा वाचयति। यथा स्वस्ति महाराजदुर्योधन। समराङ्गणात्कर्ण एतदत्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति।

अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमा-
न्भ्रातृभ्यो ऽपि ममाधिको ऽयममुना जेयाः पृथासूनवः।
त्वत्संभावित इत्यहं न च हतो दुःशासनारिर्मया
त्वं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥११४॥

दुर्योधनः। वयस्य कर्ण कर्ण। किमिदं हतभ्रातृशतं मामपरेण वाक्शल्येन घट्टयसि। भद्र सुन्दरक। अथेदानीं किमारम्भो ऽङ्गराजः।

सुन्दरकः। देव अव्वणिदसरीरावरणो अप्पवहकिदणिच्चओ सअं एव्व समलं मग्गदि।

दुर्योधनः। श्रुत्वा सावष्टम्भम्। सुन्दरक त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रतिबोधय। न खलु जयाकाङ्क्षी भवानिदानीम्। अभिन्न एवायमावयोः संकल्पः। किं तु

हत्वा पार्थान्सलिलमशिवं बन्धुवर्गाय दत्त्वा
मुक्त्वा बाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च।
कृत्वान्योन्यं सुचिरमपुनर्भावि गाढोपगूढं
संत्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ वा ॥११५॥

अथवा कर्णं प्रति मया किंचित्संदेष्टव्यम्।

वृषसेनो न ते पुत्रो न मे दुःशासनो ऽनुजः।
त्वां बोधयामि किमहं त्वं मां संस्थापयिष्यसि ॥११६॥

सुन्दरकः। जं देवो आणवेदि। इति निष्क्रान्तः।

राजा। अये नेमिधनिरिव।

सूतः। एष सज्ज एव संवर्धितो नेमिधनिः।

दुर्योधनः। नूनं परिजनोपनीतो रथः। गच्छ त्वं सज्जीकुरु।

सूतः। यदाज्ञापयति। इति निष्क्रम्य पुन प्रविशति।

दुर्योधनः। विलोक्य। किमिति नारूढो ऽसि।

सूतः। एष खलु तातो ऽम्बा च संजयेनाधिरूढं रथमारूढौ देवसकाशमनुप्राप्तौ।

दुर्योधनः। कष्टमतिबीभत्समाचरितं दैवेन। सूत गच्छ त्वं स्यन्दनं तूर्णमुपहर। अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि।

सूतः। देव त्वदेकशेषबान्धवावेतौ कथमिव न समाश्वासयसि।

राजा। सूत कथमिव समाश्वासयामि विमुखभागधेयः। पश्य।

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतो ऽहं च दुःशासनश्च।
तस्मिन्बाले प्रसभमरिणा प्राणिते तामवस्थां
पार्श्वं पित्रोरहमुपगतः किं नु वक्ष्यामि ताभ्याम् ॥११७॥

तथाप्यवश्यं वन्दनीयौ गुरू।

इति निष्क्रान्तौ।

॥ इति चतुर्थो ऽङ्कः ॥

ततः प्रविशति रथयानेन गान्धारी संजयो धृतराष्ट्रश्च।

धृतराष्ट्रः। वत्स संजय। कुरुकुलकाननैकशेषप्रवालो मे वत्सो दुर्योधनः कच्चिज्जीवति वा न वा।

गान्धारी। जाद जुज्जदि सच्चं जीवदि सो ता कस्सिं कहेइ तं उद्देसं।

संजयः। नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति।

गान्धारी। जाद एआइ त्ति भणासि किं णु क्खु संपदं तस्स भादुअसदं पासे ण भविस्सदि।

संजयः। तात। अम्ब। अवतरतं स्वैरं रथात्। उभाववतरणं नाटयतः।

ततः प्रविशति सव्रीडोपविष्टो दुर्योधनः।

संजयः। उपसृत्य। विजयतां महाराजः। नन्वेष तातोऽम्बया सह प्राप्तः। किं न पश्यति महाराजः।

दुर्योधनो वैलक्ष्यं नाटयति।

धृतराष्ट्रः।

शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णो कृतापाश्रयः।
दूरान्निर्जितसान्त्वितान्नरपतीनालोकयँल्लीलया
सद्या पुत्रक वेदनेति न मया पापेन पृष्टो भवान्॥११८॥

धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्यालिङ्गत ।

गान्धारी। वच्छ। अदिगाढप्पहारवेअणापज्जाउलस्स अम्हेसु वि ण दे पसरदि वाणी।

धृतराष्ट्रः। वत्स दुर्योधन। किमकृतपूर्वः संप्रति मय्यप्ययमव्याहारः।

गान्धारी। वच्छ। जइ तुमं वि अम्हे णालवसि किं दाणिं दुस्सासणो आलविस्सदि दुम्मरिसणो वा अण्णो वा। इति रोदिति।

दुर्योधनः।

पापो ऽहमप्रतिकृतानुजनाशदर्शी
तातस्य बाष्पपयसां तव चाम्ब हेतुः।
दुर्जातमत्र विमले भरतान्वये ऽपि
किं मां सुतक्षयकरं सुत इत्यवोचि ॥११९॥

गान्धारी। जाद अलं परिदेविदेण। तुमं वि दाव एक्को अन्धजुअलस्स मग्गोवदेसको चिरं जीव। किं मे रज्जेण वेरेण वा।

दुर्योधनः।

मातः किमप्यसदृशं विकृतं वचस्ते
सुक्षत्रिया क्व भवती क्व च दीनतैषा।
निर्वत्सले सुतशतस्य विपत्तिमेतां
त्वं नानुचिन्तयसि रक्षसि मामयोग्यम् ॥१२०॥

नूनं विचेष्टितमिदं सुतशोकस्य।

संजयः। महाराज किं वायं लोकवादो वितथः। न घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्येति।

दुर्योधनः। अपुष्कलमिदम्। उपक्रियमाणाभावे किमुपकरणेन। इति रोदिति।

धृतराष्ट्रः। दुर्योधनं परिष्वज्य। वत्स समाश्वसिहि समाश्वासय चास्मानिमामपि दीनां स्वमातरम्।

दुर्योधनः। तात दुर्लभः समाश्वास इदानीं युष्माकम्। किं तु।

कुन्त्या सह युवामद्य मया निहतपुत्रया।
विराजमानौ शोके ऽपि तनयाननुशोचतम्॥१२१॥

गान्धारी। जाद एदं एव्व दाणिं पभूतं जं तुमं वि दाव एक्को जीवेसि कं अण्णं अणुसोचिस्सं। ता जाद अकालो दे समरस्स पसीद एसो दे अञ्जली णिवत्तीअदु समरव्वावारादो। अपच्छिमं करेहि वअणं।

धृतराष्ट्रः। वत्स शृणु वचनं तवाम्बाया ममापि निहताशेषबन्धुवर्गस्य। पश्य।

दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत्फाल्गुनात्।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञो ऽधुना
क्रोधं वैरिषु मुञ्च वत्स पितरावन्धाविमौ पालय॥१२२॥

दुर्योधनः। समरात्प्रतिनिवृत्य किं करिष्यामि।

गान्धारी। जं पिदा दे विदुरो वा भणिस्सदि तं अणुचिट्ठ।

संजयः। एवमिदम्।

दुर्योधनः। संजय। अद्याप्युपदेष्टव्यमस्ति।

संजयः। देव यावत्प्राणनाशस्तावदुपदेष्टव्या नृपतयो विजिगीषवः प्रज्ञावताम्।

दुर्योधनः। शृणुमस्तावद्भवत एव प्रज्ञावतो ऽस्मत्प्रतिरूपमुपदेशम्।

धृतराष्ट्रः। वत्स युक्तवादिनि संजये किमत्र क्रोधेन। यदि प्रकृतिमापद्यसे तदहमेव तावद्वक्तं ब्रवीमि।

दुर्योधनः। कथयतु तातः।

धृतराष्ट्रः। किं विस्तरेण। संधत्तां भवानिदानीं युधिष्ठिरस्य समीप्सितेन पणेन।

दुर्योधनः। तात तनयस्नेहादम्बा बालिशत्वात्संजयश्च काममेवं ब्रवीतु युष्माकमप्येवं व्यामोहः। अथवा। इति प्रभवति पुत्रनाशशोकजन्मा हृदयज्वरः। तथा चास्खलितभ्रातृशतस्तथावधीरितवासुदेवसामोपन्यासः संप्रति दृष्टपितामहाचार्यानुजराजचक्रविपत्तिः शरीरमात्रकस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः संधिम्। अन्यच्च नयवेदिन्संजय।

हीनमानान्किल रिपून्नृपाः संदधते कथम्।
दुःशासनेन हीनो ऽहं सानुजः पाण्डवो ऽधुना॥१२३॥

धृतराष्ट्रः। वत्स। एवं गते ऽपि मम प्रार्थनया न किंचिन्न करोति युधिष्ठिरः। अन्यच्च। सर्वं दैवापकृष्टं मन्यते भवद्भ्यो युधिष्ठिरः।

दुर्योधनः। कथमिव।

धृतराष्ट्रः। श्रूयतां प्रतिज्ञा युधिष्ठिरस्य। नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्धारयामीति। बहुच्छलत्वात्संग्रामस्यानुजनाशमाशङ्कमानो यथैव भवते रोचते तथैवासौ सज्जः संधातुम्।

संजयः। एवमिदम्।

गान्धारी। उपपत्तिजुत्तं पडिवज्जस्स पिदुणो वअणं।

दुर्योधनः। तात। अम्ब। संजय।

एकेनापि विनानुजेन मरणं पार्थः प्रतिज्ञातवा-
न्भ्रातॄणां निहते शते विपहते दुर्योधनो जीवितुम्।
तं दुःशासनशोणिताशिनमरिं भिन्दन्गदाकोटिना

भीमं किंतु न विक्षिपामि कृपणः संधिं विदध्यामहम् ॥१२४॥

गान्धारी। हा जाद दुस्सासण हा दुम्मरिसण हा विअण्ण हा वीरसदप्पसविणी गन्धारी दुक्खसदं पसूदा ण सुदसदं। सर्वे रुदन्ति।

संजयः बाष्पमुत्सृज्य। तात। अम्ब। प्रतिबोधयितुं महाराजमिमां भूमिं युवामागतौ तदात्मापि तावत्संस्तभ्यताम्।

धृतराष्ट्रः। वत्स। एवं विमुखेषु भागधेयेषु त्वयि चानुगति मानबन्धमरिषु त्वदेकशेषजीवितावलम्बनेयं तपस्विनी गान्धारी किमवलम्बतां शरणमहं च।

दुर्योधनः। श्रूयताम्।

कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः
प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः।
अभिमुखमरीन्घ्नन्तः संख्ये हताः शतमात्मजा
वहतु सगरेणोढां तातो धुरं सहितो ऽम्बया ॥१२५॥

विपर्यये त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्मः।

नेपथ्ये महान्कलकलः।

गान्धारी। आकर्ण्य सभयम्। संजअ हाहाकारमिस्सं तूररसिद सुणीअदि।

संजयः। अम्ब अग्निरियमेवंविधानां भीरुजनानाम्।

धृतराष्ट्रः। वत्स संजय ज्ञायतामतिभैरवः खलु विस्तारी हाहारवः। कारणेनास्य महता भवितव्यम्।

दुर्योधनः। तात प्रसीद। पराङ्मुखं खलु दैवमस्माकं यावदपरमपि किंचिदत्याहितं न श्रावयति तावदेवाज्ञापय संग्रामं प्रति माम्।

गान्धारी। जाद मुहुत्तअं दाव मन्दभाइणिं समस्सासेहि।

धृतराष्ट्रः। वत्स यद्यपि भवान्समराय कृतनिश्चयस्तथापि रहःप्रति-

घातोपायश्चिन्त्यताम्।

दुर्योधनः।

प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रुषः
किं वा तेन कृतेन तैरिव कृतं यन्न प्रकाश्यं रणे।

गान्धारी। ता जाद एआई तुमं को दे सहाअत्तणं करिस्सदि।

दुर्योधनः।

एको ऽहं भवतीसुतक्षयकरो मातः स्थितो ऽग्रः
शाम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥१२६॥

नेपथ्ये। (कलकलानन्तरम्) भो भो योधाः। निवेदयन्तु भवन्तः कौरवेश्वराय। इदं महत्कदनं प्रवृत्तम्। अलमप्रियश्रवणपराङ्मुखतया यतः कालानुरूपं प्रतिविधातव्यमिदानीम्। तथा हि।

त्यक्तप्राजनरश्मिरङ्किततनुः पार्थाङ्कितैर्मार्गणै-
र्वाहैः स्यन्दनवर्त्मनां परिचयादाकृष्यमाणः शनैः।
वार्तामङ्गपतेर्विलोचनजलैरावेदयन्पृच्छतां
शून्येनैव रथेन याति शिबिरं शल्यः कुरून्कम्पयन् ॥१२७॥

दुर्योधनः। (श्रुत्वा सभयम्) श्रुतं कर्णनिधनविस्फोटनशनिपातदारुणमुद्घोषितम्। को ऽत्र भोः।

(प्रविश्य सम्भ्रान्तः)

सूतः। हा हताः स्मः। ([illegible])

दुर्योधनः। कथय कथय।

सूतः। आयुष्मन्। किमन्यत्।

शल्येन यथा शल्यं न दुर्हृदः प्रविशता मनो ऽस्माकम्।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन ॥१२८॥

दुर्योधनः। हा वयस्य हा कर्ण। इति मोहमुपगतः।

गान्धारी। जाद समस्सस समस्सस।

संजयः। समाश्वसिहि समाश्वसिहि महाराज।

धृतराष्ट्रः। भोः कष्टं कष्टम्।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम्।
पुत्रस्य मे सुहृत्प्रेयान्राधेयः सो ऽप्ययं हतः॥ १२९॥

वत्स समाश्वसिहि समाश्वसिहि। ननु भो हतविधे।

अन्धो ऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्ययाहम्।
अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधने ऽपि हि कृतो भवता निराशः॥ १३०॥

वत्स दुर्योधन समाश्वासय तपस्विनीं मातरम्।

दुर्योधनः। लब्धसंज्ञः।

अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम्।
सततावियुक्तमकृताप्रियं प्रियं
वृषसेनवत्सल विहाय यासि माम्॥ १३१॥

पुनर्मोहमुपगतः। सर्वे समाश्वासयन्ति।

दुर्योधनः।

मम प्राणाधिके तस्मिन्नङ्गानामीश्वरे गते।
उच्छ्वसन्नपि लज्जे ऽहमाश्वासे तात का कथा॥ १३२॥

अपि च।

शोचामि शोच्यमपि शत्रुहतं न वत्सं

दुःशासनं तमधुना न च बन्धुवर्गम्।
येनातिदुःश्रवमसाधु कृतं तु कर्णे
कर्तास्मि तस्य निधनं समरे कुलस्य ॥१३३॥

गान्धारी। जाद सिढिलेहि दाव खणमेत्तं वप्फमोक्खं।

धृतराष्ट्रः। वत्स क्षणमात्रं परिमार्जयाश्रूणि।

दुर्योधनः।

मामुद्दिश्य त्यजन्प्राणान्केनचिन्न निवारितः।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्यते ॥१३४॥

सूत केनेदमसंभावितमस्मत्कुलान्तकरं कर्म कृतं स्यात्।

सूतः। आयुष्मन्। एष किल जनः कथयति।

भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य।
निकृत्तः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य ॥१३५॥

दुर्योधनः।

कर्णाननेन्दुस्मरणात्क्षुभितः शोकसागरः।
बाडवेनेव शिखिना पीयते क्रोधजेन मे ॥१३६॥

अम्ब तात प्रसीदतम्।

ज्वलनः शोकजन्मा मामयं दहति दुःसहः।
समानायां विपत्तौ मे वरं संशयितुं रणे ॥१३७॥

धृतराष्ट्रः। दुर्योधनं परिष्वज्य।

भवति तनय सत्यं संशयः साहसेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम्।
अतिकृतिनिपुणं ते चेष्टितं मानशौड-
च्छलबहुलमरीणां संगरं क्व कृतोऽस्मि ॥१३८॥

गान्धारी। तेण एव्व सुदसदकदन्तेण विओदरेण समं समरं मग्गसि।

दुर्योधनः। अम्ब। तिष्ठतु तावद्वृकोदरः।

पापेन येन हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः।
पुत्रस्तवाम्ब तव तात नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥१३९॥

सूत। अलमिदानीं कालातिपातेन सज्जं मे रथमुपहर। त्वं चेद्भिष्यत्पाण्डवेभ्यस्तिष्ठ। गदामात्रसहाय एव समरभुवमवतरामि।

सूतः। अलमन्यथासंभावितेन। अयमहमागतोऽस्मि। इति निष्क्रान्तः।

धृतराष्ट्रः। वत्स दुर्योधन। यदि स्थिर एवास्मान्दग्धुमयं ते व्यवसायस्तत्संनिहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम्।

दुर्योधनः। नन्वभिषिक्त एव।

गान्धारी। कदरो उण सो जहिं एदं हदासं ओलम्बिस्सं।

धृतराष्ट्रः। किं वा शल्य उत वाश्वत्थामा।

दुर्योधनः। किं वा शल्येनोताश्वत्थाम्ना।

कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा।
अनिवारितसंपातिरयमात्माश्रुवारिभिः ॥१४०॥

नेपथ्ये। कलकलं कृत्वा। भो भोः कौरवबलप्रधानयोधाः। अलमस्मानवलोक्य भयादितस्ततो गन्तुम्। कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति। सर्वे ससंभ्रममाकर्णयन्ति।

प्रविश्य संभ्रान्तः

सूतः। आयुष्मन्।

प्राप्ताविकरथारूढौ पृच्छन्तौ त्वामितस्ततः।

सर्वे। कश्च कश्च।

सूतः।

स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥ १४१ ॥

गान्धारी। सभयम्। जाद किं एत्थ संपदं पडिवज्जिदव्वं।

दुर्योधनः। ननु संनिहितैवेयं गदा।

गान्धारी। हा हदम्हि अहं मन्दभाइणी।

दुर्योधनः। अलमिदानीं कार्पण्येन। संजय संजय रथमारोप्य पितरौ शिविरं प्रतिष्ठस्व। प्राप्तो ऽस्मच्छोकापनोदप्रणयी जनः।

धृतराष्ट्रः। वत्स क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे।

दुर्योधनः। तात किमनेनोपलम्भेन। तद्गम्यताम्।

धृतराष्ट्रो गान्धारी च किंचिद्गत्वा तिष्ठत।

ततः प्रविशतो रथारूढौ भीमार्जुनौ।

भीमसेनः। भो भोः सुयोधनानुजीविनः। किमिति ससंभ्रममयथातथं संचरन्ति भवन्तः। अलमावयोः शङ्कया।

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सो ऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनमरुत्पाण्डवा यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनो ऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥ १४२ ॥

धृतराष्ट्रः। संजय। दारुणः खल्पूपक्षेपः पापस्य।

संजयः। तात। कर्मणा कृतनिःशेषविप्रियाः संप्रति वाचा व्यवस्यन्ति।

दुर्योधनः। सूत कथय गदोभयोरयं तिष्ठतीति।

सूतः। यथाज्ञापयति। इति तथा कृत्वा। ननु भो वृकोदरार्जुनौ। एष महा-

राजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठतीति।

अर्जुनः। आर्य प्रसीद न युक्तं पुत्रशोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुं तद्गच्छावः।

भीमसेनः। मूढ। अनुल्लङ्घनीयः सदाचारः। न युक्तमनभिवाद्य गुरून्गन्तुम्। उपसृत्य। संजय पित्रोर्नमस्कृतिं श्रावय। अथवा तिष्ठ स्वयमेव श्रावयावः। इति यथोक्तमनुतिष्ठतः। *विश्राव्य स्वकर्म नाम च वन्दनीया गुरवः।*

अर्जुनः। उपगम्य। तात। अम्ब।

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां फाल्गुनः पाण्डवो ऽयम्॥१४३॥

भीमसेनः।

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा।
भङ्क्ता सुयोधनस्योर्वोर्भीमो ऽयं शिरसाञ्चति॥१४४॥

धृतराष्ट्रः। दुरात्मन्वृकोदर। न खल्विदं भवतैव केवलं सपत्नानामपकृतं यावत्क्षत्रं तावत्समरविजयिनो जिता हताश्च वीराः। तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि।

भीमसेनः। तात। अलं मन्युना।

कृष्टा केशेषु कृष्टा तव सदसि वधूः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृतशलभकुलावज्ञया येन दग्धाः।
एतस्माच्छ्रावये ऽहं न खलु भुजबलश्लाघया नापि दर्पात्
पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव॥१४५॥

दुर्योधनः। अरे रे मरुत्तनय। किमेवं वृद्धस्य राज्ञः पुरतो निन्दि-

तव्यमात्मकर्म श्लाघसे। अपि च।

'कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं क्ष्मापतीनां मम भुवनपतेराज्ञया द्यूतदासी।
अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥ १४६ ॥

आः दुरात्मन्। दर्पं न भवसि। इति सक्रोधमुत्थाय हन्तुमिच्छति। धृतराष्ट्रो धृत्वोपवेशयति। भीमः क्रोधं नाटयति।

अर्जुनः। आर्य किमत्र क्रोधेन।

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥ १४७ ॥

भीमसेनः। अरे रे भरतकुलकलङ्क।

अत्रैव किं न विशसेयमहं भवन्तं
दुःशासनानुगमनाय कटुप्रलापिन्।
विघ्नं गुरुर्न कुरुते यदि मद्गदाग्र-
निर्भिद्यमानरणितास्थिनि ते शरीरे ॥ १४८ ॥

अन्यच्च मूढ।

शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि।
आसीदेतत्तव कुनृपतेः कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥ १४९ ॥

दुर्योधनः। दुरात्मन्भरतकुलाधम द्यूतदास पाण्डवपशो। नाहं भवानिव विकत्थनाप्रगल्भः। किं तु।

'द्रक्ष्यन्ति न चिरात्सुप्तं पाण्डवास्त्वां रणाजिरे।

मद्भदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणाम् ॥ १५० ॥

भीमसेनः। विहस्य। यद्येवं नाश्रद्धेयो भवान्। तथापि प्रत्यासन्नमेव कथयामि।

पीनाभ्यां मद्भुजाभ्यां भ्रमितगुरुगदाघातसंचूर्णितोरोः
क्रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वःप्रभाते।
त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेनानखाग्रं
स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥ १५१ ॥

नेपथ्ये। भो भो भीमसेनार्जुनौ। एष खलु निहताशेषारातिचक्र आक्रान्तपरशुरामाभिरामयशाः प्रतापतापितदिङ्मण्डलस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति।

उभौ। किमाज्ञापयत्यार्यः।

पुनर्नेपथ्ये।

कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-
नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः।
मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥ १५२ ॥

उभौ। यदाज्ञापयत्यार्यः। इति निष्क्रान्तौ।

नेपथ्ये। अरे रे गाण्डीवाकर्षणबाहुशालिन्नर्जुनार्जुन क्वेदानीं गम्यते।

कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवता शूरशून्ये रणे ऽस्मिन्।
स्पर्शं स्मृत्वोत्तमाङ्गे पितुरनवहितन्यस्तहेतेरुपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥ १५३ ॥

धृतराष्ट्रः। आकर्ण्य सहर्षम्। वत्स दुर्योधन। द्रोणवधपरिभवोद्दीपितक्रो-

ततः प्रविशत्यासनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च।

युधिष्ठिरः। विचिन्त्य निःश्वस्य च।

तीर्णे भीष्ममहार्णवे कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसादल्पावशिष्टे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥१५९॥

द्रौपदी। सबाष्पम्। पञ्चालिए त्ति किं ण भणिदं।

युधिष्ठिरः। कृष्णे ननु मया। पुरुषमवलोक्य। बुधक।

पुरुषः। देव। आज्ञापय।

युधिष्ठिरः। उच्यतां सहदेवः। क्रुद्धस्य वृकोदरस्यापर्युषितदारुणां प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवराजस्य पदवीमीक्षितुमतिनिपुणमतयस्तेषु तेषु स्थानान्तरेषु यथार्थाभिज्ञाश्च सुसचिवाश्च भक्तिमन्तः पटुपटहरवव्यक्तघोषणाः सुयोधनपदसंचारवेदिनः प्रतिश्रुतधनपूजाप्रत्युपक्रियाश्चरन्तु समन्तपञ्चकम्। अपि च।

पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दाशाः
कक्षेषु क्षुण्णवीरुन्निचयपरिचया वल्लवाः संचरन्तु।
व्याधा व्याघ्राटवीषु स्वपरपदविदो ये च रन्ध्रेष्वभिज्ञा
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु ॥१६०॥

पुरुषः। यदाज्ञापयति देवः।

युधिष्ठिरः। एवं च वक्तव्यः सहदेवः।

ज्ञेया रहःशङ्कितमालपन्तः
सुप्ता रुगार्ताश्च वने विचेयाः।
त्रासो मृगाणां वयसां विरावो
नृपाङ्कपादप्रतिमाश्च यत्र ॥१६१॥

पुरुषः। यदाज्ञापयति देवः। इति निष्क्रम्य पुनः प्रविश्य सहर्षम्। देव पाञ्चालकः प्राप्तः।

युधिष्ठिरः। त्वरितं प्रवेशय।

पुरुषः। निष्क्रम्य पाञ्चालकेन सह प्रविश्य। एष देवः। उपसर्पतु पाञ्चालकः।

पाञ्चालकः। जयतु जयतु देवः। प्रियमावेदयामि महाराजाय देव्यै च।

युधिष्ठिरः। भद्र पाञ्चालक। कच्चिदासादिता तस्य दुरात्मनः कौरवाधमस्य पदवी।

पाञ्चालकः। देव न केवलं पदवी। स एव दुरात्मा देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुरुपलब्धः।

युधिष्ठिरः। सहर्षं पाञ्चालकं परिष्वज्य। साधु भद्र प्रियमावेदितम्। अथ दर्शनगोचरं गतः।

पाञ्चालकः। देव समरगोचरं पृच्छ।

द्रौपदी। सभयम्। कहं समरगोअरो वट्टइ मे णाहो।

युधिष्ठिरः। साशङ्कम्। सत्यं समरगोचरो मे वत्सः।

पाञ्चालकः। सत्यं किमन्यथा वक्ष्यते महाराजाय।

युधिष्ठिरः।

त्वत्तां विनापि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति।
जानामि चोद्धतगदस्य वृकोदरस्य
सारं रणेषु विजयः परिशङ्कितश्च ॥१६२॥

द्रौपदीमवलोक्य मुखादस्या आप्यमपनयति। अयि सुक्षत्रिये।

गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः
पुराभूदस्माकं नृपसदसि यो ऽयं परिभवः।
प्रिये प्रायस्तस्य द्वितयमपि पारं गमयितुं
क्षयः प्राणानां वा कुरुपतिपशोस्तस्य निधनम् ॥१६३॥

अथवा कृतं संदेहेन।

नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा।
बध्यते केशपाशस्ते स चास्याकर्षणप्रभुः ॥१६४॥

पाञ्चालक कथय कथय कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे किमधुना प्रवृत्तमिति।

द्रौपदी। भद्द कहेहि कहेहि।

पाञ्चालकः। शृणोतु देवो देवी च। अस्तीह देवेन हते मद्राधिपे शल्ये गान्धारराजशलभकुले सहदेवानलं प्रविष्टे सेनापतिनिधननराक्रन्दविरलयोधोज्झितासु समरभूमिषु रिपुपराजयोद्धतचलितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु प्रनष्टेषु कृपकृतवर्माश्वत्थामसु तथा दारुणां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः।

युधिष्ठिरः। ततस्ततः।

द्रौपदी। अग्गदो कहेहि।

पाञ्चालकः। अवधत्तां देवो देवी च। ततश्च भगवता वासुदेवेनाधिष्ठितावेकरथारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ तमनासादितवन्तौ च। अनन्तरं दैवमनुशोचति मादृशे भृत्यवर्गे दीर्घमुष्णं च निश्वसति कुमारबीभत्सौ जलधरसमयनिशासंचारितडित्प्रकरपिङ्गलैः कटाक्षैरादीपयति गदां वृकोदरे यत्किंचनकारितामधिक्षिपति विभ्रैर्भगवति नारायणे कश्चित्संविदितः कुमारस्य मारुतेरुज्झितमांसभारः प्रत्यग्रविशसितमृगलोहितचरणनिवसनस्त्वरमाणोऽन्तिकमुपेत्य पुरुषः परुषश्वासग्रस्तार्धश्रुतवर्णानुमेयपदया वाचा कथितवान्। देव कुमार। अस्मिन्महतोऽस्य सरसस्तीरे पद्धती समवतीर्णप्रतिबिम्बे तयोरेका जलोत्तीर्णा न द्वितीया। परत्र तु कुमारः प्रमाणमिति। ततः ससंभ्रमं प्रस्थिताः सर्वे वयं तमेव पुरस्कृत्य गत्वा च सरस्तीरं परिज्ञाय सुयोधनपदलाञ्छितां पदवीमासाद्य भगवता वासुदेवेनोक्तम्। वृकोदर। जानाति किल सुयोधनः सलिलस्तम्भिनीं विद्यां नूनं तेन त्वद्भयात्सरसीमेनामधिशयितेन भवितव्यम्। एतच्च वचनमुपश्रुत्य बलानुजस्य सकलदिक्प्रतिपूरितातिरिक्तमुक्तालसकलसलिलचारिचक्रं त्रासोद्वृत्तनक्रमालोडितं सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्। अरे रे वृथाप्रख्यातालीकपौरुषाभिमानिन्पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्धार्तराष्ट्रापसद।

> जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां
> मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं भाषसे।
> दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
> मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥१६५॥

अपि च। भो मानान्ध कौरवाधम।

पाञ्चाल्या मन्युवह्निः स्फुटमुपशमितप्राय एष प्रसह्य
प्रोन्मुक्तैः केशहस्तैर्हतपतिषु मया कौरवान्तःपुरेषु।
भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं भीमसेने विहितमसमये पत्र्ययास्तो ऽभिमानः ॥१६६॥

द्रौपदी। अवणीदो मे णाह मण्णू जइ पुणो वि सुलह दंसण भविस्सदि।

युधिष्ठिरः। कृष्णे नामङ्गलानि व्याहर्तुमर्हस्यस्मिन्काले। भद्र। ततस्ततः।

पाञ्चालकः। देव। ततश्चैवं भाषमाणेन वृकोदरेण वीर्यक्रोधोद्धतभ्रमितभीषणगदापरिघपाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनमाविद्धमूर्छितग्राहमुद्भ्रान्तसमस्तशकुन्तमतिभैरव वेगभ्रमितवारिसंचयमायतमपि सरः समन्तादवलोडितम्।

युधिष्ठिरः। भद्र। तथापि नोत्थितः।

पाञ्चालकः। देव। कथं नोत्थितः।

त्यक्त्वोत्थितः सरभसं सरसः स मूल-
मुद्भ्रान्तकोपदहनोग्रविषस्फुलिङ्गः।
आयस्तभीमभुजमन्दरवेल्लनाभिः
क्षीराम्बुधेः सुमथितादिव कालकूटः ॥१६७॥

युधिष्ठिरः। साधु सुक्षत्रिय साधु।

द्रौपदी। पडिवण्णो समरो ण वा।

पाञ्चालकः। उत्थाय चास्मात्सलिलाशयात्करयुगलोत्तम्भिततोरणीकृतभीमगदः कथयति स्म। मारुते किं भवतो भयेन प्रलीनं मन्यसे दुर्योधनम्। मूढ। अनभिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुम-

ध्यवसितवानस्मि पातालम्। एवं चोक्ते वासुदेवकिरीटिभ्यां द्वावप्यन्तःसलिलं निषिद्धसमारम्भौ स्थलमुत्तारितौ भीमसुयोधनौ। आसीनश्च कौरवराजः क्षितितले गदां निक्षिप्य निहतकुरुशतगजवाजिनरशतकलेवरसंमर्दसंपतितगृध्रकङ्कजम्बूकमुत्सन्नसुयोधनवलमस्मद्वीरमुक्तसिंहनादसंवलितसमरतूर्यमबान्धवममित्रबान्धवकौरवं संग्रामस्थानमवलोक्यायतमुष्णं च निश्वसितवान्। ततश्च वृकोदरेणाभिहितम्। अयि भोः कौरवराज। कृतं बन्धुजनमन्युना मैवं विषादं कृथाः। पर्याप्ताः पाण्डवाः सो ऽहमसहाय इति। किं च।

पञ्चानां मन्यसे ऽस्माकं यं सुयोधं सुयोधन।
दंशितस्यात्तशस्त्रस्य तेन ते ऽस्तु रणोत्सवः ॥१६८॥

इत्थं च श्रुत्वा किंचिदश्रुपातान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान्।

कर्णदुःशासनवधात्तुल्यावेव युवां मम।
अप्रियो ऽपि प्रियो योद्धुं त्वमेकः प्रियसाहसः ॥१६९॥

इत्युत्थाय परस्परक्रोधाक्षेपपरुषवाकलहप्रसारितघोरसंग्रामौ चित्रगदापरिघभासुरभुजभरौ मण्डलैर्विहर्तुमारब्धौ भीमदुर्योधनौ। अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः। आह च देवो देवकीनन्दनः। अपर्युषितप्रतिज्ञे मारुतौ प्रनष्टे कौरवराजे महानासीन्नो विषादः। संप्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान्। अभ्युदयोचिताश्च प्रवर्त्यन्तामनवरतमङ्गलसमारम्भाः। कृतं संदेहेन।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम्।
रामे घोरकुठारभासुरकरे क्षत्रद्रुमच्छेदिनि

क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥१७०॥

द्रौपदी। सबाष्पम्। जं देवो तिङ्कअणणाहो आणवेदि तं च कहं अण्णहा भविस्सदि।

पाञ्चालकः। न केवलमियमाशीः। असुरनिषूदनस्यादेशोऽपि।

युधिष्ठिरः। को हि नाम भगवता संदिष्टं विकल्पयति। कः कोऽत्र भोः।

प्रविश्य

कञ्चुकी। आज्ञापयतु देवः।

युधिष्ठिरः। देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य विजयमङ्गलाशंसया प्रवर्त्यन्तां तदुचिताः समारम्भाः।

कञ्चुकी। यदाज्ञापयति देवः। परिक्रम्य। भो भोः संविधातृणां पुरःसरा यथाप्रधानमन्तर्वेश्मनि दौवारिकाश्च। एष खलु भुजबलपरिक्षेपोत्तीर्णकौरवपरिभवसागरस्य निर्व्यूढदुर्धरप्रतिज्ञाभारस्य सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य बलिनः प्राभञ्जनेर्दुःशासनोरःस्थलविदलननरसिंहस्य दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य वृकोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः। आकाशे। किं ब्रूथ। सर्वतोऽधिकतरमपि प्रवृत्तं किं वा नालोकयसीति। साधु पुत्रकाः साधु। अनुताङ्कितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम्।

युधिष्ठिरः। आर्य जयंधर।

कञ्चुकी। आज्ञापयतु देवः।

युधिष्ठिरः। गच्छ प्रियाख्यापकं पाञ्चालकं पारितोषिकेण परितोषय।

कञ्चुकी। यदाज्ञापयति देवः। इति पाञ्चालकेन सह निष्क्रान्तः।

द्रौपदी। महाराग्र किं णिमित्तं उण णाहभीमसेणेण सो दुराग्रारो भणिदो पञ्चाणं वि ग्रम्हाणं जेण दे रोग्रदि तेण सह संगामो होदु त्ति। कहं णाम एग्राणं मद्दीसुदाणं एग्रदरो पत्थिदो तेण संगामो भवे. तदो ग्रञ्चाहिदं भवे।

युधिष्ठिरः। कृष्णे। एवं मन्यते जरासधघाती हतसकलसुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेपास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः परित्यजेदायुधं तपोवनं वा व्रजेत्संधिं वा पितृमुखेन याचेत। एवं सति मुद्गरमतिक्रान्तः प्रतिज्ञाभारो भवेत्सकलरिपुजयस्येति। समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः। शङ्के चाहं गदायुद्ध वृकोदरस्यैवानेन। पश्य सुक्षत्रिये।

क्रोधोद्गूर्णगदस्य नास्ति सदृशः सत्यं रणे मारुतेः
कौरव्ये कृतहस्तता पुनरियं देवे यथा सीरिणि।
स्वस्त्यस्तूद्धतधार्तराष्ट्रनलिनीनागाय वत्साय मे
शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम्॥ १७१॥

नेपथ्ये। तृषितो ऽस्मि भोस्तृषितो ऽस्मि संभावयतु कश्चित्सलिलच्छायासंप्रदानेन माम्।

युधिष्ठिरः। साश्चर्यं। कः को ऽत्र भोः।

प्रविश्य

कञ्चुकी। आज्ञापयतु देवः।

युधिष्ठिरः। ज्ञायतां किमेतत्।

कञ्चुकी। यदाज्ञापयति देवः। इति निष्क्रम्य पुनः प्रविश्य। देव जुन्मानतिथि-

रूपस्थितः।

युधिष्ठिरः। शीघ्रं प्रवेशय।

कञ्चुकी। यदाज्ञापयति देवः। इति निष्क्रान्तः।

ततः प्रविशति मुनिवेषधारी चार्वाको नाम राक्षसः।

राक्षसः। आत्मगतम्। एषो ऽहमस्मि भोः सुयोधनस्य परं मित्रं पाण्डवान्वञ्चयितुं भ्रमामि। प्रकाशम्। भोस्तृषितो ऽस्मि सभावयतु मां कश्चिज्जलच्छायाप्रदानेन। इति राज्ञः समीपमुपसर्पति। सर्वे उत्तिष्ठन्ति।

युधिष्ठिरः। मुने। अभिवादये।

राक्षसः। अकालो ऽयं समुदाचारस्य जलप्रदानेन संभावयतु माम्।

युधिष्ठिरः। मुने। उपविश्यतामासने।

राक्षसः। उपविश्य। ननु भवतापि क्रियतामासनपरिग्रहः।

युधिष्ठिरः। कः को ऽत्र भोः।

प्रविश्य गृहीतभृङ्गारः

कञ्चुकी। उपसृत्य। महाराज शिशिरसुरभिसलिलपूर्णो ऽयं भृङ्गारः पानभाजनं चेदम्।

युधिष्ठिरः। मुने। निर्वर्त्यतामुदन्याप्रतीकारः।

राक्षसः। पादौ प्रक्षाल्योपस्पृश्य। भो भोः क्षत्रियस्त्वमिति मन्ये।

युधिष्ठिरः। सम्यग्वेत्ति भवान्। क्षत्रिय एवास्मि।

राक्षसः। प्रतिदिनसुलभस्वजनविनाशनेषु संग्रामेषु युष्मत्तो नादेयं सलिलादिकम्। भवतु छाययैवानया सरस्वतीशिशिरतरंगस्पृशा च मरुतानेन विगतक्लमो भविष्यामि।

द्रौपदी। बुद्धिमदिए वीएहि महेस्सि तालविन्तेण। चेटी तथा करोति।

राक्षसः। भवति। अनुचितो ऽयमस्मासु समुदाचारः।

राजा। कथं पुनरेवं भवान्परिश्रान्तः।

राक्षसः। मुनिजनसुलभेनैव कौतूहलेन तत्रभवतां महाक्षत्रियाणां द्वन्द्वयुद्धं विलोकयितुं पर्यटामि समन्तपञ्चकम्। अद्य तु बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतो ऽस्मि।

सर्वे विषादं नाटयन्ति।

कञ्चुकी। मुने न खल्वेवम्। भीमसुयोधनयोरिति कथय।

राक्षसः। आः अविदितवृत्तान्तमिव कथं मामाक्षिपसि।

युधिष्ठिरः। महर्षे कथय कथय।

राक्षसः। क्षणमात्रं विश्रम्य सर्वं कथयामि भवते न पुनरस्य।

युधिष्ठिरः। कथय किमर्जुनसुयोधनयोः।

राक्षसः। ननु पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमिति।

राजा। न भीमसेनसुयोधनयोरिति।

राक्षसः। वृत्तं तत्।

युधिष्ठिरो द्रौपदी च मोहमुपगतौ।

कञ्चुकी। सलिलेनासिच्य। समाश्वसितु देवो देवी च।

चेटी। समस्ससिदु समस्ससिदु देवी। उभौ संज्ञां लभेते।

युधिष्ठिरः। किं कथयसि मुने वृत्तं भीमसुयोधनयोर्गदायुद्धमिति।

द्रौपदी। भअवं कहेहि किं वुत्तं त्ति।

राक्षसः। कञ्चुकिन्कौ पुनरेतौ।

कञ्चुकी। ब्रह्मन्नेष देवो युधिष्ठिरः। इयं पाञ्चालराजतनया।

राक्षसः। आः दारुणमुपक्रान्तं मया नृशंसेन।

द्रौपदी। हा णाह भीम। इति मोहमुपगता।

कञ्चुकी। किं नाम कथितम्।

चेटी। समस्ससिदु देवी।

रुपस्थितः।

युधिष्ठिरः। शीघ्रं प्रवेशय।

कञ्चुकी। यदाज्ञापयति देवः। इति निष्क्रान्तः।

ततः प्रविशति मुनिवेषधारी चार्वाको नाम राक्षसः।

राक्षसः। आत्मगतम्। एषो ऽहमस्मि भोः सुयोधनस्य परं मित्रं पाण्डवान्वञ्चयितुं भ्रमामि। प्रकाशम्। भोस्तृषितो ऽस्मि सभावयतु मां कश्चिज्जलच्छायाप्रदानेन। इति राज्ञः समीपमुपसर्पति। सर्वे उत्तिष्ठन्ति।

युधिष्ठिरः। मुने। अभिवादये।

राक्षसः। अकालो ऽयं समुदाचारस्य जलप्रदानेन संभावयतु माम्।

युधिष्ठिरः। मुने। उपविश्यतामासने।

राक्षसः। उपविश्य। ननु भवतापि क्रियतामासनपरिग्रहः।

युधिष्ठिरः। कः को ऽत्र भोः।

प्रविश्य गृहीतभृङ्गारः

कञ्चुकी। उपसृत्य। महाराज शिशिरसुरभिसलिलपूर्णो ऽयं भृङ्गारः पानभाजनं चेदम्।

युधिष्ठिरः। मुने। निर्वर्त्यतामुदन्याप्रतीकारः।

राक्षसः। पादौ प्रक्षाल्योपस्पृश्य। भो भोः क्षत्रियस्त्वमिति मन्ये।

युधिष्ठिरः। सम्यग्वेत्ति भवान्। क्षत्रिय एवास्मि।

राक्षसः। प्रतिदिनसुलभस्वजनविनाशनेषु सङ्ग्रामेषु युष्मत्तो नादेयं सलिलादिकम्। भवतु छाययैवानया सरस्वतीशिशिरतरंगस्पृशा च मरुतानेन विगतक्लमो भविष्यामि।

द्रौपदी। बुद्धिमदिए वीरद्धि महेस्सि तालविन्तेण। चटी तथा करोति।

राक्षसः। भवति। अनुचितो ऽयमस्मासु समुदाचारः।

राजा। कथं पुनरेवं भवान्परिश्रान्तः।

राक्षसः। मुनिजनसुलभेनैव कौतूहलेन तत्रभवतां महाक्षत्रियाणां द्वन्द्वयुद्धं विलोकयितुं पर्यटामि समन्तपञ्चकम्। अद्य तु बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतो ऽस्मि।

सर्वे विषादं नाटयन्ति।

कञ्चुकी। मुने न खल्वेवम्। भीमसुयोधनयोरिति कथय।

राक्षसः। आः अविदितवृत्तान्तमिव कथं मामाक्षिपसि।

युधिष्ठिरः। महर्षे कथय कथय।

राक्षसः। क्षणमात्रं विश्रम्य सर्वं कथयामि भवते न पुनरस्य।

युधिष्ठिरः। कथय किमर्जुनसुयोधनयोः।

राक्षसः। ननु पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमिति।

राजा। न भीमसेनसुयोधनयोरिति।

राक्षसः। वृत्तं तत्।

युधिष्ठिरो द्रौपदी च मोहमुपगतौ।

कञ्चुकी। सलिलमासिच्य। समाश्वसितु देवो देवी च।

चेटी। समस्ससिदु समस्ससिदु देवी। उभौ संज्ञां लभेते।

युधिष्ठिरः। किं कथयसि मुने वृत्तं भीमसुयोधनयोर्गदायुद्धमिति।

द्रौपदी। भअवं कहेहि किं वुत्तं त्ति।

राक्षसः। कञ्चुकिन्कौ पुनरेतौ।

कञ्चुकी। ब्रह्मन्नेष देवो युधिष्ठिरः। इयं पाञ्चालराजतनया।

राक्षसः। आः दारुणमुपक्रान्तं मया नृशंसेन।

द्रौपदी। हा णाह भीम। इति मोहमुपगता।

कञ्चुकी। किं नाम कथितम्।

चेटी। समस्ससिदु देवी।

युधिष्ठिरः। सास्रम्। ब्रह्मन्।

पदे संदिग्ध एवास्मिन्दुःखमास्ते युधिष्ठिरः।

वत्सस्य निश्चिते तत्त्वे प्राणत्यागादहं सुखी ॥ १७२ ॥

राक्षसः। सानन्दमात्मगतम्। अयं मे यत्नः। प्रकाशम्। यद्येवमवश्यं कथनीयं संक्षेपेण कथयामि। न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम्।

युधिष्ठिरः। अश्रूणि मुञ्चन्।

सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा।

वत्सस्य किमपि श्रोतुमेष दत्तः क्षणो मया ॥ १७३ ॥

राक्षसः। श्रूयताम्।

तस्मिन्कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

द्रौपदी। सहसोत्थाय। तदो तदो।

राक्षसः। स्वगतम्। कथं पुनरनयोर्लब्धसंज्ञतामपनयामि। प्रकाशम्।

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः संगरः।

आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता .

यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारौ गतः ॥ १७४ ॥

युधिष्ठिरः। हा वत्स वृकोदर। इति मोहमुपगतः।

द्रौपदी। हा णाह भीमसेण हा मम परिहवपडिआरपरिचत्तजीविअ जडासुरबअहिडिम्बकिम्मीरकीचअजरासंधणिसूदण णाह सोअन्धिआहरणचाडुआर देहि मे पडिवअणं। इति मोहमुपगता।

कञ्चुकी। सास्रम्। हा कुमार भीमसेन धार्तराष्ट्रकुलकमलिनीप्रालेयवर्ष। महाराज समाश्वसिहि समाश्वसिहि। भद्रे समाश्वासयात्रभवतीम्। महर्षे त्वमप्याश्वासय महाराजम्।

राक्षसः। स्वगतम्। आश्वासयामि प्राणांस्त्याजयितुम्। प्रकाशम्। अपि भो

भीमाग्रज। क्षणमेकमाधीयतामाश्वासः कथाशेषो ऽप्यस्ति।

युधिष्ठिरः। समाश्वस्य। मत्कृते किमस्ति कथावशेषः।

राक्षसः। ततश्च कृते तस्मिन्सुक्षत्रिये वीरसुलभां गतिमुपगते समग्रसंगलितं भ्रातृवधशोकजं बाष्पमुत्सृज्य भ्रातृवधशोकादपहाय गाण्डीवं प्रत्यग्रक्षतजच्छटाचर्चितां तामेव गदां भ्रातृहस्ताग्रतादाकृष्य निवार्यमाणः संभ्रित्सुना वासुदेवेनागच्छागच्छेति सोपहासं भ्रमितगदाझंकारसंमूर्छितगम्भीरवचनधनिनाहूयमानः कौरवराजेन तृतीयो ऽनुजस्ते किरीटी योद्धुमारब्धः। तथा कृतिनस्तस्य गदायां तस्य निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुः प्रयत्नात्स्वरथमारोप्य द्वारकां नीतः।

युधिष्ठिरः। साधु भो अर्जुन। तदेव प्रतिपन्ना वृकोदरानुगमनपदवी गाण्डीवं परित्यजता। अहं पुनः केनोपायेन प्राणापगममहोत्सवमुत्सहिष्ये।

द्रौपदी। हा णाह भाडुवच्छल। ण जुत्तं भादरं असिक्खिदं गदाए सत्तुणो मुहं गच्छन्तं उवेक्खिदुं। मोहमुपगता।

राक्षसः। ततश्चाहम्।

युधिष्ठिरः। किमतः परं श्रुतेन। हा तात भीमसेन जतुगृहसमुद्रसंतरणयानपात्र हा किर्मीरहिडिम्बासुरजरासंधजयमल्ल हा कीचकसुयोधनानुजकुलकमलिनीकुञ्जर हा कृतपणप्रणयिन्मम शरीरस्थितिपरिखेदशङ्कासूदन हा महाज्ञासंपादक हा कौरववनदावानल।

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सीदता
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता।
किं नामापकृतं मया तदधिकं त्वय्यद्य निर्वत्सलं

त्यक्त्वानाथमबान्धवं सपदि मां येनासि दूरं गतः ॥१७५॥

द्रौपदी। अपवार्य। महाराअ किं एदं वट्टइ।

युधिष्ठिरः। कृष्णे किमन्यत्।

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसंधिभेदाशनिः।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजो ऽर्जुनगुरुर्गतो ऽस्तं किल ॥१७६॥

द्रौपदी। णाह सव किल्ल मे केसा संजमिदव्वा। ण जुत्तं वीरस्स खत्तिअस्स पडिण्णाद सिढिलेदु। ता पडिवालेहि मं जाव उवसप्पामि।

इति पुनर्मोहमुपगता।

युधिष्ठिरः। आकाशे। अम्ब पृथे। श्रुतो ऽयं तव पुत्रस्य समुदाचारः। मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः। तात जरासंधशत्रो। किं नाम वैपरीत्यमेतावता कालेनात्याग्यपि त्वयि समालोकितं जनेन। अथवा मयैव बहूपलब्धम्।

दत्त्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतो ऽपि हि मया न क्रुध्यसि प्रीयसे।
स्थित्यर्थं मम मत्स्यराजभवने प्राप्तो ऽसि यत्सूदतां
तान्येतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥१७७॥

मुने किं कथयसि। तस्मिन्कौरवभीमयोः। इति पठति।

राक्षसः। एवमेतत्।

युधिष्ठिरः। विगलन्ति भागधेयानि। भगवन्कामपाल कृष्णाग्रज।

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यानुजे मे।

तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
को ऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ॥ १७८ ॥

द्रौपदीमुपगम्य। अयि पाञ्चालि। उत्तिष्ठोत्तिष्ठ। समानदुःखावावां भवावः। मूर्छया किं मामेवमतिसंधत्से।

द्रौपदी लब्धसंज्ञा। बन्धेदु णाहो दुस्सोहणरुहिरोल्लेण हत्थेण दुस्सासणमोइदं मे केसहत्थं। रज्जे बुद्धिमदिए तव पच्चक्खं एव्व णाहेण पडिणादं। कञ्चुकिनमुपेत्य। संदिट्ठं मे दाव देवईणन्दणेण केसग्गहणा आरम्भीअदु त्ति ता उवणेहि मे पुप्फदामाइं विरएह दाव कवरिं करेह भअवदो पुरिसोत्तमस्स वअणं ण हि अलीअं मन्देदि सो। अहवा किं मए अदिसंतत्ताए भणिदं अद्दूरगदं अज्जउत्तं अणुगमिस्सं। युधिष्ठिरमुपेत्य। महाराअ आदीवअ मे चिदं। तुमं वि खत्तधम्मं अणुवट्टन्तो एव्व मे णाहस्स जीविअहरस्स अहिमुहो होहि।

युधिष्ठिरः। युक्तमाह पाञ्चाली। कञ्चुकिन्क्रियतामियं तपस्विनी चितासंविभागेन सहवेदना। ममापि सज्जं धनुरुपनय। अलमथवा धनुषा।

तस्यैव देहरुधिरोक्षितपाटलाङ्गी-
मादाय संप्रति गदामपविद्धचापम्।
भ्रातृप्रियेण कृतमद्य यदर्जुनेन
श्रेयो ममापि हि तदेव कृतं जयेन ॥१७९॥

राक्षसः। राजन्। रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु। वृथा तत्र गमनम्।

कञ्चुकी। सरोषम् धिङ्मुनिजनासदृशं राक्षसस्य सदृशं भवता व्याहृतम्।

राक्षसः। स्वगतम्। किं ज्ञातो ऽहमनेन। प्रकाशम्। भोः कञ्चुकिन्। एत-द्ब्रवीमि। तयोर्गदायाः खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः। जानामि च तयोर्गदायां भुजसारम्। दुःखितस्य राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि।

युधिष्ठिरः। बाष्पं विमुञ्चन्। साधु महर्षे साधु स्निग्धमभिहितम्।

कञ्चुकी। महाराज शोकान्धतया देवकल्पेनापि देवेन त्वया प्राकृतेनेव त्यज्यते क्षत्रधर्मः।

युधिष्ठिरः। आर्य जयंधर।

शक्यामि तौ परिघपीवरबाहुदण्डौ
वित्तेशशक्रपुरदर्शितवीर्यसारौ।
भीमार्जुनौ क्षितितले प्रविचेष्टमानौ
द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम्॥ १८०॥

अयि पाञ्चालराजतनये मद्दुर्नयप्रापशोच्यदशे। यथा संदीप्यते पावकस्तथा सहिताविव बन्धुजनं संभावयावः।

द्रौपदी। अज्ज करेसु दारुसंचअं। कहं ण को वि महाराअस्स वअणं करेदि। हा णाह अज्ज एस, तुए विणा महाराओ परिअणेण वि परिहवीअदि।

राक्षसः। सदृशमिदं भरतकुलवधूनां पत्युरनुसरणम्।

युधिष्ठिरः। महर्षे। न कश्चिच्छृणोति तावदावयोर्वचनम्। इन्धनप्रदानेन प्रसादः क्रियताम्।

राक्षसः। मुनिजनविरुद्धमिदम्। स्वगतम्। पूर्णा मे मनोरथा यावदनुपलक्षितः समीपे ऽहमिन्धनमादीपयामि। प्रकाशम्। राजन्न शक्नुमो वयमिहैव स्थातुम्। इति निष्क्रान्तः।

युधिष्ठिरः। कृष्णे। न कश्चिदस्मद्वचनं करोति। भवतु स्वयमेवाहं दारुसंचयं कृत्वा चितामादीपयामि।

द्रौपदी। तुवरदु तुवरदु महाराओ।

नेपथ्ये कलकलः।

द्रौपदी। सभयमाकर्ण्य। महाराअ। कस्स वि एसो बहलदप्पिदस्स णिग्घोसो सुणीअदि। अवरं वि अप्पिअं सुणिदुं अत्थि णिबन्धो तदो विलम्बीअदि।

युधिष्ठिरः। न खलु विलम्ब्यते। उत्तिष्ठ। इति सर्वे परिक्रामन्ति।

युधिष्ठिरः। अयि पाञ्चालि। अम्बायाः सपत्नीजनस्य च किंचित्संदिश्य निवर्तय परिजनम्।

द्रौपदी। एवं महाराअ अम्बाए संदिसिस्सं। जो सो बअहिडिम्बकिम्मीरअजरासंधजयमल्लो वि मज्झमपुत्तो मम दे हदासाए पक्खवादेण परलोअं गदो ऽत्ति।

युधिष्ठिरः। भद्रे बुद्धिमतिके। उच्यतामस्मद्वचनादम्बा।

येनासि तत्र जतुवेश्मनि दीप्यमाने
निर्वासिता सह सुतैर्भुजयोर्बलेन।
तस्य प्रियस्य बलिनस्तनयस्य पार्थं
को ऽन्यस्तवाम्ब कथयेत्कथमीदृशस्य॥१८१॥

आर्य जयंधर। त्वयापि सहदेवसकाशं गत्वा वक्तव्यश्च तत्रभवान्पाण्डुकुलवृहस्पतिर्माद्रेयः कनीयानस्माकम्। सकलकुरुकुलकमलाकरदावानलो युधिष्ठिरः परलोकमभिप्रस्थितः प्रियमनुजमनुकूलं सततमाशंसनीयमसंपूर्णं व्यसने ऽभ्युदये च धृतिमन्तं भवन्तमालिङ्ग्य शिरसि चाघ्रायेदं प्रार्थयते।

मम हि वयसा दूरेण त्वं श्रुतेन समो भवा-
न्कृतसकृज्जया बुद्ध्या ज्येष्ठो मनीषितया गुरुः।
शिरसि मुकुलौ पाणी कृत्वा भवन्तमतो ऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥१८२॥

अपि च। बाल्ये संवर्धितस्य नित्यमभिमानिनो ऽस्मत्सदृशहृदयसार-स्यापि नकुलस्य ममाज्ञया वचने स्थातव्यम्। नानुगन्तव्यास्मत्पदवी त्वया हि वत्स।

विस्मृत्यास्मान्श्रुतविशदया स्वाग्रजौ चात्मबुद्ध्या
त्वीर्णे पाण्डावुदकपृषतानश्रुगर्भान्प्रदातुम्।
दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥ १८३ ॥

गच्छ जयंधर। अस्मच्छरीरस्पृष्टिकया शापितेन त्वयाकालहीनमिदमव-श्यमावेदनीयम्।

द्रौपदी। हला बुद्धिमदिए भणाहि मम वअणेण पिअसहिं। सु-भद्दं वच्छाए उत्तराए चउत्थो मासो पडिवण्णस्स गब्भस्स। तुमं एव्व कुलपडिट्ठावअं सावहाणं रक्खेत्ति। कदा वि इदो लोअगदस्स ससुर-उलस्स अम्हाणं सलिलबिन्दुदो भविस्सदि त्ति।

युधिष्ठिरः। सास्रम्। भोः कष्टम्।

शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्यङ्कबन्धे।
दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरे ऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनो ऽयम् ॥ १८४ ॥

द्रौपदि साधयेदानीमध्यवसितम्। कञ्चुकिनमवलोक्य। जयंधर। स्वशरीरेण

ज्ञापितो ऽसि। न तथा गम्यते। 662

कञ्चुकी। साक्रन्दम्। हा देव पाण्डो। तव सुतानामजातशत्रुभीमार्जुननकुलसहदेवानामयं दारुणः परिणामः। हा देवि कुन्ति भोजराजभवनपताके।

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिनः।
आचार्येण वृकोदरस्य हलिनामत्तेन मत्तेन वा
दग्धं त्वत्सुतकाननं तव महो यस्याश्रयाच्छीतला॥१८५॥

इत्युन्निष्क्रान्तः।

युधिष्ठिरः। आर्य जयंधर जयंधर।

प्रविश्य

कञ्चुकी। आज्ञापयतु देवः।

युधिष्ठिरः। वक्तुमिच्छामि। न पुनरेतावन्ति भागधेयानि युष्माकम्। यदि कदाचिद्विजयी स्याद्वत्सो ऽर्जुनस्तद्वक्तव्यो ऽस्मद्वचनाद्भवता।

हली हेतुः सत्यं भवति मम वत्सस्य निधने
तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः।
अतः क्रोधः कार्यो न खलु मयि च प्रेम भवता
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपदवीम्॥१८६॥

कञ्चुकी। यदाज्ञापयति देवः। इति निष्क्रान्तः।

युधिष्ठिरः। सहर्षम्। ननूद्धतशिखाहस्ताद्धुतास्मद्विधव्यसनिजनसमिद्धो भगवान्हुताशनस्तत्रेन्धनमात्मानं करिष्ये।

द्रौपदी। पसीदतु महाराओ मम इमिणा अपच्छिमेण पणएण अह एव्व अग्गदो गमिस्सामि।

662

युधिष्ठिरः। यद्येवं संहितावेवाभ्युदयमपि भोक्ष्यावहे।

चेटी। हा भअवन्तो लोअवाला परित्ताअह सोमवंसराएसिं। अअं क्खु राआ राअसूअसंदप्पिदक्कुदवहो खण्डवसंदप्पिदक्कुदवहस्स किरीडिणो जेट्ठो भादा सुगहिदणामहेओ महाराअजुहिट्ठिरो। एसा देवी पञ्चालराअकुलदेवदा वेदिमज्झसंभवा जण्णसेणी। दुवे वि सरीरिणा णिक्कूणस्स कालाणलस्स इन्धणीहोन्ति। परित्ताअह परित्ताअह। तयोरग्रत पतित्वा। किं ववसिदं देवीए देवेण अ।

युधिष्ठिरः। अयि बुद्धिमतिके। यन्नाथेन प्रियानुजेन विना सदृशं तत्। उत्तिष्ठ। उत्तिष्ठ सलिलमुपनय।

चेटी। जं देवो आणवेदि। इति निष्क्रम्य पुन प्रविश्य। जेदु जेदु महाराओ।

युधिष्ठिरः। पाञ्चालि त्वमपि तावत्स्वपक्षपातिनो वृकोदरस्य प्रियस्यार्जुनस्योदकक्रियां कुरु।

द्रौपदी। महाराओ एव्वं करेदु अहं पुणो जलणं पविसिस्सं।

युधिष्ठिरः। अनतिक्रमणीयं लोकवृत्तम्। भद्रे। उदकमुपानय।

चेटी तथा करोति।

युधिष्ठिरः। पादौ प्रक्षाल्योपस्पृश्य च। एष च तावत्सलिलाञ्जलिर्गाङ्गेयाय भीष्माय गुरवे प्रपितामहाय शांतनवे पितामहाय विचित्रवीर्याय। साम्रम्। तात तवाधुनावसरः। अयमपि तत्रभवते स्वर्गस्थाय गुरवे सुगृहीतनाम्ने पित्रे पाण्डवे।

अद्य प्रभृति वां दत्तमस्मत्तो दुर्लभं पुनः।
तात त्वयाम्बया सार्धमेतद्दत्तं निपीयताम् ॥ १८७ ॥

हा।

एतज्जलं जलजनीलविलोचनाय

भीमाय भोक्तव मनाप्यविभक्तमस्तु।
एकं क्षणं तु विषहस्व पिपासितो ऽसि
पातुं त्वया सह जवादयमागतो ऽस्मि ॥ १८८ ॥

अथवा सुलक्षियाणां गतिमुपगतं वत्समहमुपगतो ऽपि न कृती द्रष्टुम्। वत्स भीमसेन।

मया पीतं पीतं तदनु भवताम्वास्तनयुगं
मदुच्छिष्टैर्वृत्तिं जनयसि रसैर्वत्सलतया।
वितानेष्वप्येवं तव च मम सोमे विधिरभू-
न्निवापाम्भः पूर्वं पिबसि कथमेवं त्वमधुना ॥ १८९ ॥

कृष्णे देहि जलाञ्जलिं तत्रभवते भीमाय।

द्रौपदी। हञ्जे बुद्धिमदिए देहि मे उदग्रं।

चेटी तथा करोति।

द्रौपदी। उपसृत्य जलाञ्जलिं पूरयित्वा। कस्स जलं देमि।

युधिष्ठिरः।

तस्मै देहि जलं पूर्णं सहसा गच्छते दिवम्।
अम्बापि येन गान्धार्या रुदितेन समीकृता ॥ १९० ॥

द्रौपदी। णाह परिजणोवणीदं सग्गदस्स पादोदग्रं भविस्सदि एदं।

युधिष्ठिरः। फाल्गुनायञ्ज।

असमाप्तप्रतिज्ञे ऽपि याते त्वयि ममानुजे।
मुक्तकेश्यैव ते दत्तः प्रियया सलिलाञ्जलिः ॥ १९१ ॥

द्रौपदी। उट्ठेहि महाराअ दूरं गच्छदि दे भादा।

युधिष्ठिरः। दक्षिणाक्षिस्पन्दं सूचयित्वा। पाञ्चालि निमित्तानि मे कथयन्ति

संभावयसि वृकोदरमिति। भवतु शीघ्रं दहनमुपसर्पावः।

द्रौपदी। आ पज्जलिदो भअवं हुदवहो।

नपथ्ये कलकल।

प्रविश्य सम्भ्रान्त

कञ्चुकी। परित्रायतां परित्रायतां महाराजः। एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलीकृताम्बरो रक्तभीषणगदाशनिरुद्धतकालदण्ड इवान्तको ऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्तते।

युधिष्ठिरः। हा दैव। ते निर्णयो जातः। हा गाण्डीवधन्वन्।

इति मुह्यति।

द्रौपदी। हा अज्जउत्त मम सअंवरसअंगाहकुडुम्बिअ धणंजअ। पिअं भादरं संभावेसि ण उण महाराअं इमं दासजणं अ। इति मूर्छति

राजा। हा असदृशमल्ल हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक हा बदर्याश्रममुनिद्वितीयतापस हा द्रोणाचार्यप्रियशिष्य हा अस्त्रशिक्षाबलपरितोषितगाङ्गेय हा राधेयकुलकमलिनीप्रालेयवर्ष हा गन्धर्वनिर्वासितदुर्योधन हा पाण्डवकुलकमलिनीराजहंस।

तां वत्सलामनभिवन्द्य विनीतमम्बां<br>
गाढं च मामनुपगूह्य मयाप्यनुक्तः।<br>
एतां स्वयंवरवधूं सदृशीमदृष्ट्वा<br>
दीर्घाधवासमपि वत्स कथं गतो ऽसि॥ ११२॥

मोहमुपगत।

कञ्चुकी। भोः कष्टम्। एष दुरात्मा सुयोधनो यवेष्टमित एवाभिवर्तते। सर्वथा संप्रत्ययमेव कालोचितः प्रतीकारः। भद्रे बुद्धिमतिके चितासमी-

यमुपनयात्रभवतीं पाञ्चालराजतनयाम्। भद्र त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ ब्रूहि। अथवा। एवमवस्थिते महाराजे ऽस्तमितयोर्भीमार्जुनयोः क्व नु परित्राणम्। नेपथ्ये। कलकलानन्तरम्। भोः समन्तपञ्चकसंचारिणः क्षतजास्वादमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बूकोलूकवायसभूयिष्ठावशिष्टविरलाश्च योधाः। कृतं मद्दर्शनत्रासेन। कथयत कस्मिन्नुद्देशे याज्ञसेनी संनिहिता। किं कथयाम्युपलक्षणं तस्याः।

ऊरुं करेण परिघट्टयतः सलीलं
दुर्योधनस्य पुरतो ऽपहृताम्बरा या।
दुःशासनस्य करकर्षणभिन्नमौलिः
सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥ १६३ ॥

कञ्चुकी। भो देवि याज्ञसेनि परिभूयसे संप्रत्यनाथा कुरुकुलकलङ्केन।

युधिष्ठिरः। सहसोत्थाय। पाञ्चालि न भेतव्यं न भेतव्यम्। उपनीयतां मे सज्जं धनुः। दुरात्मन्दुर्योधनहतक। आगच्छ। अपनयामि ते गदाकौशलसंभूतं भुजदर्पं शिलीमुखासारेण। अन्यच्च। रे कुरुकुलाङ्गार।

प्रियमनुजमपश्यंस्तं जरासंधशत्रुं
कुपितहरकिरातद्वेषिणं तं च वत्सम्।
त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो
न तु पुनरपहर्तुं बाणवर्षैस्त्वयासून् ॥ १६४ ॥

ततः प्रविशति गदापाणिः शोणितोक्षितसर्वाङ्गो

भीमसेनः। उक्तं परिक्रामन्। भो भोः समरापञ्चकसंचारिणः सैनिकाः। को ऽयमावेगः।

रक्षो नाहं न भूतं रिपुरुधिरजलप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियो ऽस्मि।

भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृत व-
त्रासेनानेन लोलैर्हृतकरितुरगान्तर्हितैरास्यते किम्॥ १९५॥

कञ्चुकी। देवि पाण्डुस्नुषे। उत्तिष्ठोत्तिष्ठ। संप्रति झटितिचिताप्रवेश एव श्रेयान्।

द्रौपदी। सहसोत्थाय। कहं ण संभावेमि अज्ज वि चिदासमीवं।

युधिष्ठिरः। कः को ऽत्र भोः। सनिषङ्गं धनुरुपनय। कथं न कश्चित्परिजनः। भवतु बाहुयुद्धेनैव दुरात्मानमेव गाढमालिङ्ग्य ज्वलनमभिपातयामि। परिकरं बध्नाति।

कञ्चुकी। संयम्यन्तामिदानीं नयनोपरोधिनो दुःशासनावकृष्टा मूर्धजाः। अस्तमिता संप्रति प्रतीकाराशा। चितासमीपमेव द्रुततरं संभावय।

युधिष्ठिरः। न खल्वनिहते तस्मिन्दुर्योधनहतके संहर्तव्याः केशाः।

भीमसेनः। पाञ्चालि न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणयात्मपाणिना।

द्रौपदी भयात्परिक्रामति।

भीमसेनः। तिष्ठ तिष्ठ भीरु क्वाधुना गम्यते। इति केशेषु ग्रहीतुमिच्छति।

युधिष्ठिरः। भीममालिङ्ग्य। दुरात्मन्भीमार्जुनशत्रो दुर्योधनहतक।

आ शैशवादनुदिनं जनितापराधः
क्षीबो मदेन भुजयोर्हतराजपुत्र।
आसाद्य मे ऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य पाप॥ १९६॥

भीमसेनः। अये कथमार्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति। आर्य प्रसीद प्रसीद।

कञ्चुकी। निरूप्य सहर्षम्। महाराज वञ्च्यसे। अयं खल्वायुष्मान्भीमसेनः सुयो-

धनक्षतजारुणितसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिः। अलमधुना संदेहेन।

चेटी। द्रौपदीमालिङ्ग्य। देवि पूरिदपडिण्णाभारो णाहो देवीए वेणीसंहारं कादुं तुमं अण्णेसदि।

द्रौपदी। हञ्जे किं मं अलीअवअणेहिं आसासेसि।

कञ्चुकी। महाराज वक्ष्यसे। इति पूर्वोक्तमेवाभिधत्ते।

युधिष्ठिरः। जयंधर। अपि सत्यं नायमनुजवैरी सुयोधनहतकः।

भीमसेनः। आर्य। देव। अजातशत्रो। भीमार्जुनगुरो। कुतो ऽद्यापि सुयोधनहतकः। मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविनो

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनं भीमगात्रे
लक्ष्मीरार्ये निषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम्॥ १९०॥

युधिष्ठिरः स्वैरं मुक्त्वा भीममवलोकयन्नश्रूणि प्रमार्जयति।

भीमसेनः। पादयोः पतित्वा। जयत्वार्यः।

युधिष्ठिरः। वत्स बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम्। तत्कथय कच्चिज्जीवति भवान्समं किरीटिना।

भीमसेनः। निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमो ऽर्जुनश्च।

युधिष्ठिरः। पुनर्गाढमालिङ्ग्य।

रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः
प्रियो भ्राता भीमो मम भवसि यो ऽसौ बकरिपुः।

भीमसेनः। आर्य सो ऽहम्।

युधिष्ठिरः।

जरासंधस्योरःसरसि रुधिरासारसलिले
तटाघातक्रीडाललितमकरः संयति भवान् ॥ १९८ ॥

भीमसेनः। आर्य मुञ्चतु मां क्षणमेकं भवान्।

युधिष्ठिरः। किमपरमवशिष्टम्।

भीमसेनः। आर्य सुमहदवशिष्टम्। संयच्छामि तावदनेन दुर्योधन-दुःशासनरुधिरोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम्।

राजा। त्वरं गच्छतु भवान्। अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम्।

भीमसेनः। भवति पाञ्चालराजतनये दिष्ट्या वर्धसे रिपुकुलक्षयेण।

द्रौपदी। उपसृत्य। जेदु जेदु णाहो। इति भयादपसर्पति।

भीमसेनः। राजपुत्रि। अलमेवं मामालोक्य त्रासेन। पश्य।

येनाकृष्टासि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि।
कान्ते राज्ञः कुरूणामपि रुधिरमिदं मद्गदाचूर्णितोरो-
रङ्गेऽङ्गेषु सक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥ १९९ ॥

बुद्धिमतिके। क्व संप्रति भानुमती योपहसति पाण्डवदारान्। भवति वेदिसंभवे याज्ञसेनि।

द्रौपदी। आणवेदु णाहो।

भीमसेनः। स्मरति भवती यन्मयोक्तम्।

द्रौपदी। णाह सुमरामि अणुहवामि अ। चञ्चद्भुजेति पूर्वोक्तं पठति।

भीमसेनः। देवि भवति संयम्यतामिदानीं धार्तराष्ट्रकुलकालरात्रिर्दुःशासनविलुलिता वेणी।

द्रौपदी। णाह विसुमरिदम्हि एदं वावारं णाहस्स पसाएण पुणो वि सिक्खिस्सं।

चेटी वेणी बध्नाति।

नेपथ्ये।

क्रोधान्धैर्यस्य मोक्षात्कुरुनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यतुलभुजबलैः पार्थिवान्तःपुराणि।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
सो ऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः॥२००॥

युधिष्ठिरः। देवि। एष ते वेणीसंहारो ऽभिनन्द्यते नभस्तलसंचारिणा सिद्धजनेन।

ततः प्रविशतो वासुदेवार्जुनौ।

उभावुपगम्य।

कृष्णः। विजयतां निहतसकलारातिमण्डलः सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः।

अर्जुनः। जयत्वार्यः।

युधिष्ठिरः। विलोक्य। अये भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी। भगवन्किमुत मे विजयादन्यद्यस्य भगवान्पुराणपुरुषो नारायणो मङ्गलान्याशास्ते।

कृतगुरुमहदादिक्षोभसंभूतमूर्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम्।
अजममरमचिन्त्यं चिन्तयित्वा भवन्तं
भवति जगदुःखं किं पुनर्देव दृष्ट्वा॥२०१॥

अर्जुनमालिङ्ग्य। वत्स परिष्वजस्व माम्।

कृष्णः । एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्यजाबालिप्रभृतयो महर्षयः कल्पिताभिषेकमङ्गला नकुलसहदेवसात्यकिप्रमुखाश्च सेनापतयो यादवमत्स्यमागधकुलसंभवाश्च राजकुमाराः स्कन्धोत्तम्भित- तीर्थवारिकलशास्त्वाभिषेकं धारयन्ति । अहमपि चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरमाणागतः ।

युधिष्ठिरः । किं नाम चार्वाकेण विप्रलब्धा वयम् । सरोषम् । क्वासौ धार्तराष्ट्रसखः पुण्यजनापसदो येन मे महांश्चित्तविभ्रमः कृतः ।

कृष्णः । निगृहीतः स दुरात्मा नकुलेन । तत्कथय महाराज किमस्मात्परं समीहितम् ।

युधिष्ठिरः । एवं पुण्डरीकाक्ष न किंचिन्न ददाति भगवान्प्रसन्नः । अहं पुरुषसाधारणया बुद्ध्या संतुष्ये न खल्वतः परमभ्यर्थयितुं क्षमः । पश्यतु देवः ।

> क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
> पाञ्चाल्या मम दुर्नये पतितया तीर्णो निकारार्णवः ।
> त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
> किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥ २०२ ॥

तथापि प्रीतश्चेद्भगवांस्तदिदमस्तु भरतवाक्यम् ।

> अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं
> भवतु च भवद्भक्तिर्द्वैधं विना पुरुषोत्तम ।
> दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
> त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः ॥ २०३ ॥

कृष्णः । एवमस्तु ।

इति निष्क्रान्ताः सर्वे ।

॥ इति षष्ठोऽङ्कः ॥

॥ श्रीमृगराजलक्ष्मभट्टनारायणविरचितं
वेणीसंहारं नाम नाटकं
समाप्तम् ॥

20. चेटी। कुमार यदि परिजनहीना भवेत्तदो देवी भणाति।

22. 23. चेटी। कुमार मयैव भणितम्। यदि भानुमति युष्माकममुक्तेषु केशेषु वयमस्माकं देव्याः केशाः संयम्यन्त इति।

॥ पत्र १३ ॥

8. 9. द्रौपदी। किं नाथ दुष्करं त्वयि परिकुपिते ऽनुगृहीतमेतद्व्यवसितं ते भ्रातरः।

॥ पत्र १५ ॥

3. 4. द्रौपदी। नाथ किंदानीमेष प्रलयजलधरघनकुपितमांसल क्षणे क्षणे समरदुन्दुभिस्ताड्यते।

6. द्रौपदी। क एव यत्रः।

16. 17. द्रौपदी। नाथ। असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु।

18. 19. चेटी। अन्यच्च देवी भणाति। नाथ युष्माभिः पुनरपि समरादागत्याहमाश्वासयितव्या।

23. द्रौपदी। नाथ मा खलु मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला

॥ पत्र १६ ॥

1. 2. अनवेक्षितशरीराः सञ्चरिष्यथ यतो ऽप्रमत्तसञ्चरणीयानि रिपुबलानि श्रूयन्ते।

॥ पत्र १८ ॥

13—15. सखी। सखि भानुमति कस्मादिदानीं त्वं स्वप्नकदर्शनमात्रस्य कृते ऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैव विगलितधीरभावातिमात्रं संतप्यसे।

16. चेटी। भट्टिनि शोभनं भणति सुवदना।

17. भानुमती। एवं न्वेतत्

18. चेटी। स्वप्नमन्तरेण किं न खलु किमपि न प्रलपति।

19. 20. भानुमती। कन्य एव न्वेतत्। किं पुनरिदं मे ऽकुशलदर्शनं प्रतिभाति स्वप्नकम्।

21. सखी। प्रियसखि यथैव तत्कथय स्वप्नकं यद्वयमपि प्रतिश्रा-

॥ पत्र १९ ॥

1. 2. वयन्तो धर्मप्रशंसया देवतासंकीर्तनेन दूर्वादिपरिग्रहेण च परिहरिष्यामः।

3. 4. चेटी। शोभनं खलु भणति सुवदना। अकुशलदर्शनानि स्वप्नकानि देवतानां प्रशंसया कुशलपरिणामानि भवन्तीति श्रूयते।

5. भानुमती। यथैव तत्कथयिष्ये। अवहिता तावद्भव।

6. सखी। अवहितास्मि कथयतु प्रियसखी।

7. 8. भानुमती। अद्य किल मे प्रमदवन आसीनाया केनाप्यतिशयितदिव्यरूपेण नकुलेनाहिशतं व्यापादितम्।

9. सखी। शान्तं पापं शान्तं पापं प्रतिहतममङ्गलम्। देवि ततस्ततः।

10. भानुमती। हला भयेन विस्मृतास्मि तत्तिष्ठ यावत्सर्वं स्मृत्वा कथयिष्ये।

॥ पत्र २१ ॥

9. सखी। प्रियसखि। अपि स्मृतं त्वया।

10. 11. भानुमती। सखि स्मृतम्। अद्य किल प्रमदवन आसीनाया ममाग्रतः केनाप्यतिशयितदिव्यरूपेण नकुलेनाहिशतं व्यापादितम्।

12. उभे। शान्तं पापं शान्तं पापम्। ततस्ततः।

13. भानुमती। सन्तापापहृतहृदयया पुनरपि मया विस्मृतम्।

17. सखी। अलं सन्तापेन कथयतु प्रियसखी।

॥ पत्र २२ ॥

6. 7. भानुमती। हला हन्त ततस्तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता।

19. सखी। ततस्ततः।

20. 21. भानुमती। ततोऽहं त्वरितमासनस्थानमेत्य लतामण्डपं प्रविष्टा। ततः स मामनुसरन्नेव लतामण्डपं प्रविष्टः।

॥ पत्र २३ ॥

4. उभे। ततस्ततः।

5 भानुमती। ततस्तेन सगर्वप्रसारितकरेणापहृतं मे स्तनांशुकम्।

10. उभे। ततस्ततः।

11. 12 भानुमती। हला ततोऽहमार्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीसंगीत-शब्देन प्रतिबोधितास्मि।

16. 17 18 सुवदना। यत्किमप्यत्याहितं तद्भागीरथीप्रमुखाणां नदीनां सलिलेनापह्रियतां भग-वता ब्राह्मणानामप्याशिषाहुतिहुतेन प्रज्वलितेन भगवता हुताशनेन दह्यताम्।

॥ पत्र २४ ॥

2 भानुमती। हला कथय किमत्र शुभसूचकम्।

4—9. सखी। अत्र नास्ति स्तोकमपि शुभसूचकम्। यदत्रालीकं कथयित्वा परादिनी भविष्यामि। स इदानीं स्निग्धो जनो य पृष्टः फलमपि हितं भणति। सखि सर्वमेवैतदशुभनिवेदनं तद्देवतानां प्रणा-मेन दूर्वादिपरिग्रहेण चान्तर्यताम्। न खलु दृष्टिगो नकुलस्यान्यस्य वा दर्शनमहिशतवधमपि स्वप्ने प्रश-सन्ति विचक्षणाः।

20. 21. भानुमती। हला सुवदने। उदयगिरिशिखरान्तरितविमुक्तरथवरो विगलितसंध्यारागप्रस-न्नदुरालोकमण्डलो जातो भगवान्दिवसनाथः।

22 23 चेटी। भट्टिनि रोषान्वितकनककान्तिसश्रीकेण लताजालान्तरोपहितकिरणजालेन पि-ञ्जरितोद्यानभूमिभागः पूरितप्रतिज्ञ इव रिपुर्दुःखे-

॥ पत्र २५ ॥

4 2 तपनीयो भगवान्सहस्ररश्मिः सवृत्तः। तत्समयस्ते लोहितचन्दनकुसुमगर्भेणार्घेण पर्यवस्थातुम्।

3 4. भानुमती। हला तरलिके। उपनय मेऽर्घभाजनं यावद्भगवतः सहस्रकिरणस्य सपर्यां नि-र्वर्तयामि।

5. 6 चेटी। यद्देव्याज्ञापयति। भट्टिनि। इदमर्घभाजनं निर्वर्तयतु भगवतः सहस्ररश्मेः सपर्याम्।

8. 9 सखी। कथं महाराज आगतो हन्त जातोऽस्या नियमभङ्गः।

10—14. भानुमती। भगवन्नम्बरमहार्णवैकरत्न पूर्वदिग्वधूमुखमण्डनकुङ्कुमविशेषक सक-लभुवनैकरत्नप्रदीप यदत्र स्वप्नकदर्शने किमप्यत्याहितं तद्भगवतः प्रणामेन सभ्रातृकस्यार्यपुत्रस्य कुशलपरिणा-मो भवतु। कन्ये तरलिके। उपनय मे कुसुमान्यपराण्यपि देवतानां सपर्यां निर्वर्तयितुम्।

16 भानुमती। अहो प्रमाद परिजनस्य।

॥ पत्र २६ ।

1 2 भानुमती। अभ्यनुज्ञातुमर्हत मां महाराज । अस्ति मे कस्मिन्नपि नियम अभिलाष ।

5 6 भानुमती। आर्यपुत्र। अतिमात्र मे शङ्का बाधते तदनुमन्यता मामार्यपुत्र ।

12 13 भानुमती। आर्यपुत्र न खलु किमपि मे शङ्काकारणं युष्मासु संनिहितेषु किं त्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि।

21 भानुमती। परित्रायतां परित्रायतामार्यपुत्र ।

॥ पत्र २७ ॥

4—7 सखी। महाराज प्रविशावेतद्दारुपर्वतप्रासादम्। उच्छेदकारी खल्वयमुत्थितपरुषरजःकलुषीकृतनयनो विदलिततरुवरशब्दविन्नस्तमन्दुरापरिभ्रष्टवल्लभतुरगमः पर्याकुलीकृतजनपदतिमिरपिण्डः समीरणासार ।

॥ पत्र २८ ।

1 भानुमती। दिष्ट्योत्पातसमीरणासारो न बाधते।

2 3 सखी। महाराज। आरोहणसंभ्रमनिःसह प्रियसख्या ऊरुयुगल तत्कस्मादिदानीं महाराज आसनवदीं नानुभूषयति।

21 भानुमती। आर्य किमनर्थं मन्त्रयसे।

॥ पत्र २९ ॥

6 7 भानुमती। आर्यपुत्र परिहार्यतामतदनिमित्तं प्रसन्नब्राह्मणाद्दानुघोषणा होमेन च।

11 12 प्रतिहारी। जयतु जयतु महाराज । महाराज। एषा खलु जामातु सिन्धुराजस्य माता वधूर्दुःशला च प्रतिहारभूम्यां तिष्ठति।

16 प्रतिहारी। यन्महाराज आज्ञापयति।

18 माता। परित्रायतां कुरुनाथ ।

21 माता। जात कुत कुशलम्।

23 माता। अद्य खलु पुत्रवधामर्षोद्दीपितेन गाण्डीविनानस्त-

॥ पत्र ३० ॥

1 मिते दिवसनाथे तस्य वध प्रतिज्ञात ।

7 8 माता। जात यतश्च बन्धुवधामर्षोद्दीपितकोपानला अवज्ञितशरीरा वीरा परिश्रमन्ति।

15 माता। असमाप्तप्रतिज्ञाभरस्यात्मवधो ऽस्य प्रतिज्ञात ।

॥ पत्र ३१ ॥

2 3 भानुमती। आर्यपुत्र यद्यप्येव तथापि गुरुकृतप्रतिज्ञाभारो धनंजयो गिरा खलु शङ्काया ।

4 माता। जात साधु कालोचितं त्वया मन्त्रितम्।

॥ पत्र ३३ ॥

3 4 तावदनुपमासवीतेन कुम्भसहस्रमपि संचितम्।

यदि न पिबामि शोणितं वर्षशत समरो भविष्यति ॥

5—9 यदि सिन्धुराजवधदिवस इव समरकर्म प्रतिपद्यते ऽर्जुनस्ताश्च पयस्तभरितकोष्ठागार मा-

सशोणितैर्न गृह भवति („भूणते")। अथ कु नु रुधिरप्रियो भवति („भूणते")। तथाऽस्मिन्समरे प्रियभर्तारं रुधिरप्रियमन्विष्यामि। भवतु शब्दापयिष्यामि तावत्। रुधिरप्रिय रुधिरप्रिय। इत एहीत एहि।

11 12 राक्षस। प्रत्यग्रहतानां मनुष्याणां वसुष्णं रुधिरं च लभते तदप मम परिश्रम क्षणमात्रमेव लघु नश्यति।

14 15 राक्षस। अरे क एष मा शब्दापयति। अरे कथं वसागन्धा। वसागन्धे मा कि शब्दापयसि।

16 राक्षसी। रुधिरप्रिय। एतत्खलु तव कारणात्पराक्रमस्य कस्या-

॥ पत्र ३४ ॥

1 2 पि राजर्षे शरीरावयवप्रभूत प्रभूतवसासुहृच्चिकुकया कोष्णा रुधिरमग्रमांस चानीत तत्पिबैतत्।

3 4 राक्षस। साधु वसागन्धे साधु शोभन कृत त्वया अलीवो ऽस्मि पिपासित एतत्कोष्णं रुधिरमानीतम्।

5—7 राक्षसी। रुधिरप्रिय। ईदृश हतनरगजतुरगमशोणितवसासमुद्रे सचरे समराङ्गणे परिभ्रमन्कथं पिपासितो ऽसीत्याश्चर्यमाश्चर्यम्।

8 9 राक्षस। अरे वसागन्धे। पुत्रघटोत्कचशोकसन्तप्तहृदया स्वामिनी हिडिम्बादेवी प्रक्षिप्ता ततो ऽस्मि।

10 11 राक्षसी। रुधिरप्रिय। अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नापगमिष्यति।

12 13 राक्षस। अयि कुतो ऽस्या उपशमं कि त्वभिमन्युवधशोकसमानदुःखया सुभद्रादेव्या यावत्तया च समाश्वासित।

14 15 राक्षसी। रुधिरप्रिय गृहाण त्वमेतदग्रिमैरं कपालसचितमग्रमांसोपदंश च पिब नवशोणितासवम्।

16 17 राक्षस। वसागन्ध। अथ कियत्प्रभूत त्वया सचित रुधिरमग्रमांस च।

18—22 राक्षसी। अरे रुधिरप्रिय पूर्वसचित त्वमेव जानासि नवसचित शृणु। भगदत्तशोणितकुम्भ सिन्धुराजवसाकुम्भौ द्वौ मत्स्याधिपभूरिश्रवसोमदत्तबाह्लीकप्रमुखाणां नरेन्द्राणां प्राकृतपुरुषाणां च रुधिरवसामांसस्य घटा अपिनद्धमुखा सहस्रसख्या सन्ति मे गृहे।

23 राक्षस। साधु साधु सुगृहिण्या साधु साधु।

॥ पत्र ३५ ॥

1 2 अन्ना ते सुगृहिणीत्वेन स्वामिन्या हिडिम्बादेव्या सविभाग च प्रसन्न मे दारिद्र्यम्।

3 राक्षसी। रुधिरप्रिय कीदृशः स्वामिन्या सविभागः कृत।

4—9 राक्षस। अद्याहं स्वामिन्या हिडिम्बादेव्या राजकुमार शब्दापयितवत्युक्तो यथा रुधिरप्रिय। अद्यप्रभृत्यार्यपुत्रभीमसेनस्य पृष्ठतो ऽनुपृष्ठ समरं आहिण्डितव्यमिति। तत्तस्यानुमार्गगामिनो एतस्यानुपातितनरेन्द्रशोणितवसाबहुभुक्तावितस्यैव पाणसमुल्लासो मे भवति („भूणते")। त्वमपि विश्रब्धा भूत्वा रुधिरवसादि कुम्भसहस्र सचय।

10 11 राक्षसी। रुधिरप्रिय किं निमित्त कुमारभीमसेनस्य पृष्ठतो ऽनुपृष्ठमाहिण्डितुम्।

12 13 राक्षस। वसागन्ध तेन स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातं तदस्माभी राक्षसैरनुप्रविश्य पातव्यमिति।

14, 15 राक्षसी। साधु स्वामिन्या साधु। सुसविधानो मे भर्ता त्वया कृत।

17 18 राक्षसी। अरे रुधिरप्रिय किं नु खल्वेष महान्कलकल श्रूयते।

19. 20. राक्षसः । हला वसागन्धे । एष खलु धृष्टद्युम्नेन क्रोधात् केशेष्वाकृष्यासिपत्रेण ——

21. 22. राक्षसी । रुधिरप्रिय रुधिरप्रिय वयस्यागतय क्षणाय रुधिरं पिबाम ।

23. राक्षसः । वसागन्धे आरोपणप्रोषित सहवेतद्रलक्तं दृष्ट्वा

॥ पत्र ३६ ॥

1. प्रविशति तालिकमेतेन ।

3. राक्षसो । रुधिरप्रिय पुनरप्येव महान्कलकलः श्रूयते ।

4—6. राक्षसः । वसागन्धे । एष सव्यधनुर्धराकृष्टासिपत्र इत इत एवागच्छति यदापि द्रुपदसुतो ऽस्मानपि व्यापादयिष्यति । तदेहि स्वामिन्या हिडिम्बादेव्या शरणं पूर्णं ।

॥ पत्र ५८ ॥

7—23. पुरुष । आर्या अपि नास्मिन्नुद्देशे पारिपार्श्विको दृष्टा युष्माभिर्महाराजदुर्योधनो न वेति । कथं न को ऽपि मन्त्रयते । भवत्वेतेषां बद्धपरिकराणां पुरुषाणां समूहो दृश्यते इत्यत्र गत्वा प्रक्ष्यामि । कथमेते स्वस्वामिनो गाढप्रहारपीडितस्य शरसमाकृष्टानतुभुग्नैः कङ्कपत्रैर्हृदयाच्छल्यान्युद्धरन्ति तत्खल्वेते न जानन्ति । भवत्वन्यतो विचेष्यामि । इमे खल्वपरे प्रभूततराः स्खलिता वीरमानुषा । अत्र गत्वा प्रक्ष्यामि । अहो जानीत कस्मिन्नुद्देशे कुरुनाथो वर्तत इति । कथमेते ऽपि मां दृष्ट्वाधिकतरं रुदन्ति । तत् खल्वेते ऽपि जानन्ति । हा दुष्करं खल्वत्र वर्तते । एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रणानुकम्पिविसनया वाष्पा सहानुम्रियते । साधु वीरमातः साधु । अन्यस्मिन्नपि जन्मान्तरे ऽनिहतपुत्रका भविष्यसि । भवत्वन्यतो विचेष्यामि । अयमपरो बहुप्रहारनिहतकायो ऽकृतव्रणप्रतीकार एव वाधसमूहरक्षितः । इमं शून्यासनं तुरगममुपालभ्य रोदिति । नूनमनेनैवात्र स्वामी व्यापादित इति । तत् खल्वेते ऽपि जानन्ति । भवत्वन्यतो गत्वा प्रक्ष्यामि । कथं सर्व एवावस्थानुरूपं व्यसनमनुभवन्नाराधितविगुणतया पर्याकुलो जनः । तावत्

॥ पत्र ५१ ॥

1—13 अत्र प्रक्ष्यामि क वोपालप्स्ये । भवतु स्वयमेवात्र विचेष्यामि । भवतु दैवमेवेदानीमुपालप्स्ये । अहो दैव । एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथिवीमण्डलैकनाथो महाराजदुर्योधनो ऽन्विष्यते न ज्ञाने कस्मिन्नुद्देशे स वर्तत इति । अथवा किमत्र दैवमुपालभे । तस्य खल्वेतन्निर्भर्त्सितविदुरवचनबीजस्य परिभूतपितामहहितोपदेशाङ्कुरस्य शकुनिहतकप्रोत्साहनादिविटपमूलस्य जतुगृहद्यूतविषशाखिनः सम्भूतचिरकालसञ्चितवैरालवालस्य पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति । यथात्रैव विविधरत्नप्रभासङ्कलितसूर्यकिरणप्रसूतशक्रचापसहस्रसंपूरितदशदिशामुखो लूनकेतुवंशो रथो दृश्यते । तदिह तत्रैवाप्यवश्यमेतेन, महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम् । जयतु जयतु महाराज ।

16 सुन्दरक । देव कुशलं शरीरमात्रेण ।

19 सुन्दरक । देव न रथो भग्नो ऽस्य मनोरथो ऽपि ।

22 23. सुन्दरक । यद्देव आज्ञापयतीति । अये देवस्य मुकुटमणिप्रभावेणापनीता मे रथापहारवेदना । श्

4—7. सुन्दरकः । शृणोतु देवः । अद्य तावद् दुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कुटिलभ्रुकुटिभङ्गभीषणललाटपट्टेनाविच्छिन्नसंधानमोक्षेण शिलीमुखसंघातवर्षिणाभियुक्तः स दुराचारो मध्यमपाण्डवो भीमसेनहतकः ।

9—11. सुन्दरकः । ततो देवोभयबलमिलद्दर्पोत्कटतुरगपदातिसमुद्धूतधूलिनिवहेन पर्यस्तगजघटासंघातेन च विस्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलं न भुवनतलं लक्ष्यते ।

13. 14. सुन्दरकः । ततो देव द्रागाकृष्टधनुर्गुणास्फोटनटंकारगम्भीरभीषणेनान्धकारेण ज्ञायते गर्जितं प्रलयजलधरेणेति ।

16—19. सुन्दरकः । ततश्च द्वयोस्तयोरन्योन्यसिंहनादगर्जितपिशुनं विविधपरिमुक्तप्रहरणाहतकवचनिःसृतज्वलनविद्युत्कं बहलरुधिरबिन्दुखद्योतभासुरं गम्भीरस्तनितचापजलधरप्रसृतशरधारासहस्रवर्षदुर्दर्शनं सम्भूतं समरदुर्दिनम् ।

21—23. सुन्दरकः । ततश्च देवैतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः पराभवशङ्किना धनंजयेन वज्रनिर्घातनिर्घोषविषमरसितरथशिखरस्थितवानरध्वजगमनवाहनव्याकुलनारायणदेवशङ्खचक्रगदाशिलाञ्छितचटुलचतुर्घोट—

॥ पत्र ६१ ॥

1. 2. दर्पदुर्दर्शन आपूरितपाञ्चजन्यदेवदत्तारवसितमतिरचभरितदशदिशामुखकुहरो धावितस्तमुद्देशं रथवरः ।

4—7. सुन्दरकः । ततो भीमसेनधनंजयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससंभ्रम विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डज्यो दक्षिणहस्तक्षिप्तशरपुङ्खबन्धनो विघट्टनवारितसारथिकस्तं देशमुपगतः कुमारवृषसेनः ।

9—12. सुन्दरकः । ततश्च तेन देवागच्छतैव कुमारवृषसेनेन विदलितागलितश्यामलस्निग्धपुङ्खैः कठिनकङ्कपत्रैः क्षुराग्रवदनैः शिलानिशितश्यामलाञ्जलयन्त्रैः कुसुमित इव तरुर्मुहूर्तकेन शिलीमुखैः प्रच्छादितो धनंजयस्य रथवरः ।

14—20. सुन्दरकः । ततो देव तीक्ष्णविक्षिप्तनिशितभल्लवर्षिणा धनंजयेनोद्दिश्य भणितम् । अरे रे वृषसेन पितुरपि तावन्न ते ममाभिमुखं स्थातुं युक्तम् किं पुनर्यातो बालस्य । तदन्यैः कुमारैः सहायुध्यस्वेति । एवं च निशम्य गुरुजनाधिक्षेपोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभीषणभ्रुकुटिभङ्गभीषणेन चापधारिणा कुमारवृषसेनेनापि मर्मभेदकैः परुषवचनैः सुनिशितकृतपातैर्निर्भर्त्सितो गाण्डीवी बाणैः पुनर्दुर्वचनैः ।

22. 23. सुन्दरकः । ततश्च देव शिलानिशितशरनिपातच्छेदनोपजातमन्युना गाण्डीविना गाण्डीवमण्डलीकृत्याग्रहनिर्भिन्नवज्रनिर्घातघोषेण बाणानिपत-

॥ पत्र ६२ ॥

1. नभसि पिच्छदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूप विलसितम् ।

3—5. सुन्दरकः । ततश्च देव तथा प्रेक्ष्य तस्य प्रजाः समरव्यापारचतुरत्वविभावितपूर्णमुखधनुर्गुणगमनागमनसंधानमोक्षचतुलकरतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म ।

7—9. सुन्दरकः । ततश्च देव परिवेषितरथाश्वसारथि विमुक्तचिरनिवारितरसानुबन्धा द्वयोरपि कुरुराजपाण्डवबलयोः साधु वृषसेन साध्विति कलकलानुयायी वीरलोकः साधुवादं प्रवृत्तः ।

11—11. सुन्दरकः । ततश्च द्वयोरपि तत्रमलधनुःकर्षणशरासनव्याजिनः गुणस्य तथाविधेन

समरकर्मारम्भेण हर्षरोषकरुणाशङ्कासंकटे ऽनुवर्तमानस्य स्वामिनो ऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पाकुला दृष्टिः कुमारवृषसेने।

16—18. सुन्दरक। ततश्च देवोभयबलप्रवृत्तसाधुकारामर्षितेन शरवर्षप्रज्वलितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि ज्यायामपि नरेन्द्रलाञ्छने सितातपत्रे व्यापारिता घन शिलीमुखाः।

20. 21. सुन्दरक। ततो देव विरथो लूनगुणकोदण्डकः परिभ्रमणमात्रव्यापारप्रतिषिद्धशरसंपातो मण्डलानि विरचयितुं प्रवृत्तः कुमारः।

23. सुन्दरक। ततश्च देव सुतरथविध्वंसनामर्षोद्दीपितेन स्वामिना-

॥ पत्रं ६३ ॥

1—6. अङ्गराजेनानायितभीमसेनाभियोगेन प्रस्तुतो धनंजयस्योपरि शिलीमुखासारः कुमारवृषसेनो ऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि संवृत्तो धनंजयाभियोगे। भणितं च कुमारेण। रे रे तातधिक्षे-पमुखर मध्यमपाण्डव मम शरास्तव शरीरमुज्झित्वान्यस्मिन् निपतन्तीति भणित्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः।

9—13. सुन्दरक। ततश्च देव तस्य शरसहस्रसंपातमवधूय किरीटिना गृहीता रथोत्सङ्गात्कृपा-णकनककिङ्किणीजालवाचालविरावविषमा मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधर-त्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिः सोपहासं विमुक्ता धनंजयेन कुमाराभिमुखम्।

15—18. सुन्दरक। ततश्च देव प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशरं धनुर्हृ-दयाद्धीरसुलभ उत्साहो नयनाद्बाष्पसलिलं वदनाद्धसितं हसितं च धनंजयेन सिंहनादं विनादितं वृकोद-रेण च दुष्करं दुष्करमित्याक्रन्दितं कुरुबलेन।

20—22. सुन्दरक। ततश्च देव कुमारवृषसेनेनाकर्णाकर्षितनिशितक्षुरप्रेण सुचिरं निर्भर्त्स्यार्धपथ एव भागीरथीव भगवता विषमलोचनेन त्रिधाकृता शक्तिः।

॥ पत्रं ६४ ॥

1—3. सुन्दरक। तत एतस्मिन्नन्तरे कृतकलकलमुखरेण वीरलोकसाधुवादेनान्तरितः समर-तूर्यरवः सिद्धचारणगणविमुक्तेन कुसुमप्रकरेण प्रच्छादितं समराङ्गणम्।

5—9. सुन्दरक। ततश्च देव भणितं स्वामिनाङ्गराजेन। भो वृकोदर। असमाप्तस्तव ममापि सम-रव्यापारस्तदनुमन्यतां मा मुहूर्तकं प्रेक्षामहे तावद्वत्सस्य तव भ्रातुर्धनुर्वेदशिक्षानिपुणत्वं तवाप्येतत्प्रेक्षणीय-मिति। ततो विरतो रणव्यापारनिर्बन्धान्मुहूर्तकं प्रशमितवैरौ जातौ द्वावपि प्रेक्षकौ भीमसेनाङ्गराजौ।

11. 12. सुन्दरक। ततश्च देवैतस्मिन्नन्तरे शक्तिखण्डनामर्षितेन गाण्डीविनैवं भणितम्। रे रे दुर्योधनप्रमुखाः।

14—18. सुन्दरक। शृणोतु देव। अरे दुर्योधनप्रमुखाः कुरुबलमेनाप्रभवः। रे ऽविनयनदीकर्णधार कर्ण। युष्माभिर्मम परोक्षमेकाकी पुत्रको ऽभिमन्युर्व्यापादितो ऽहं पुनर्युष्माकं प्रेक्षमाणानामेतं कुमा-रवृषसेनं स्मर्तव्यमेव करोमीति भणित्वा सगर्वमास्फालितमनेन निर्घातघोषनिर्ह्रादज्यारवं गाण्डीवं स्वामि-नापि सज्जीकृतं कालपृष्ठम्।

20—23. सुन्दरक। ततश्चैतस्मिन्नन्तरे प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचिते ऽङ्गराजवृषसेनरथकूलङ्कषे बाणानने। तत्रापि द्वाभ्यामन्योन्यस्नेहदर्शितशिक्षाविशेषाभ्यामभियुक्तो मध्यमपाण्डवः।

॥ पत्रं ६५ ॥

2—5. सुन्दरकः । ततश्च गाण्डीवविना तारास्फालितज्यानिर्घोषमात्रविज्ञातव्यापारार्जुनेन तथासित पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न बलानि न सारथिर्न तुरंगमो न दिशा न वीरलोकश्च संलक्ष्यते।

7—9. सुन्दरकः । ततश्च देव तावन्मात्रमेवातिक्रान्ते शरसंपाते सहर्षसिंहनादे पाण्डवसैन्ये विमुक्ताक्रन्दे कौरवबले समुत्थितो महान्कलकलो हा हतः कुमारो वृषसेन इति।

11—13. सुन्दरकः । ततश्च देव प्रेक्षे कुमारं हतसारथितुरंगं लूनातपत्रचापचामरकेतुवंशं स्वर्गात्प्रभ्रष्टमिव सुरकुमारं हृदयमर्मभेदिनैकेन शिलीमुखेन भिन्नदेहं रथमध्ये पर्यस्तम्।

॥ पत्रं ६६ ॥

7—10. सुन्दरकः । ततो देव तथाहतस्य पुत्रस्य दर्शनेन गलितमश्रुजलमुज्झित्वानपेक्षितपरप्रहरणेन स्वामिनाङ्गराजेनाभियुक्तो धनंजयः । ततस्तं च सुतवधामर्षितं विमुक्तजीविताशं तथा परिक्रामन्तं प्रेक्ष्य भीमनकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनंजयस्य रथः।

12—16. सुन्दरकः । ततोऽर्जुनचापमहाप्रलयपयोधरनिमुक्तशरधारासहस्रैः पूरितेषु दिशामुखेषु, शल्येन भणितः स्वाम्यङ्गराजः । यथाङ्गराज हततुरंगमो मथितचक्रनेमिकूबरस्ते रथस्तन्न युक्तं भीमार्जुनाभ्यामभियोक्तुमिति भणित्वा निवर्तितो रथोऽपसारितः स्वामी स्यन्दनादुपप्रकारं च समाश्वासितः।

18—22. सुन्दरकः । ततश्च स्वामिना मुहूर्तं विलम्ब्य परिजनोऽभिहितोऽन्यं रथं न उपनयति परिजनोपनीतमन्यं रथं प्रेक्ष्य मयि दत्तदृष्टिः सुन्दरकेहीति भणितं च । अहं चोपगतः समीपम् । ततोऽपनीय शीर्षस्थानात्पट्टिकां शरीरस्थगलितैः शोणितबिन्दुभिर्दिग्धवदनं बाणं कृत्वाभिलिखित एष देवस्य संदेशः।

॥ पत्रं ६७ ॥

9—10. सुन्दरकः । देव । अपनीतशरीरावरणः आत्मवधकृतनिश्चयः स्वयमेव समरं मार्गति।

21. सुन्दरकः । यद्देव आज्ञापयति।

॥ पत्रं ६९ ॥

4. गान्धारी । जात श्रूयते सत्यं जीवति स तावत्कस्मिन्कथय तमुद्देशम्।

6. 7. गान्धारी । जात । एकाकीति भणसि किं नु खलु सांप्रतं तस्य भ्रातृशतं पार्श्वे न भविष्यति।

॥ पत्रं ७० ॥

2. 3. गान्धारी । वत्स । अतिगाढप्रहारवेदनापर्याकुलस्यास्यास्त्वपि न मे प्रसरति वाणी।

5. 6. गान्धारी । वत्स यदि त्वमप्येवमाल्लपसि किमिदानीं दुःशासनः आलपिष्यति दुर्मर्षणो वान्यो वा।

12. 13. गान्धारी । जात । यन्मां परिदेवितेन त्वमपि तावदेको ऽध्युन्मत्तस्य मातापित्रोरेकश्चिरं जीव । किं मे राज्येन वैरेण वा।

॥ पत्रं ७१ ॥

6—9. गान्धारी । जात । एतदेवेदानीं प्रभूतं यत्त्वमपि तावदेको जीवसि किमन्यदनुशोचितव्यानि । तदात्ताकालस्तो समाश्वस । प्रसीद । एष तेऽञ्जलिर्निवर्ततां समरव्यापारात् । क्रियतां कुरु वचनम्।

10. गान्धारी । पालिता ते विदुरो वा भणिष्यति तदनुतिष्ठ।

॥ पत्र ७२ ॥

19 गान्धारी। उपपत्तियुक्तं प्रतिपक्षस्य विनिर्वचनम्।

॥ पत्र ७३ ॥

2 3 गान्धारी। हा जात दुःशासन हा दुर्मर्षण हा विकर्ण हा वीरशतप्रसविनी गान्धारी दुःखशतं प्रसूता न सुतशतम्।

16 गान्धारी। सञ्जय हाहाकारमिश्रं तूर्यरसितं श्रूयते।

22 गान्धारी। जात मुहूर्तकं तावन्मन्दभागिनीं समाश्वासय।

॥ पत्र ७४ ॥

5 गान्धारी। तज्जातैकाकी त्वं कस्ते सहायत्वं करिष्यति।

॥ पत्र ७५ ॥

2 गान्धारी। जात समाश्वसिहि समाश्वसिहि।

॥ पत्र ७६ ॥

4 गान्धारी। जात शिथिलय तावत्क्षणमात्रं बाष्पमोचनम्।

॥ पत्र ७७ ॥

1 गान्धारी। तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गसि।

13 गान्धारी। कतरः पुनः स यत्रैता हताशामवलम्बिष्ये।

॥ पत्र ७८ ॥

4 गान्धारी। जात किमत्र साम्प्रतं प्रतिपत्तव्यम्।

6 गान्धारी। हा हतास्म्यहं मन्दभागिनी।

॥ पत्र ८२ ॥

3 गान्धारी। जात प्रत्युद्गच्छैतं महाभागम्।

॥ पत्र ८४ ॥

7 द्रौपदी। पाञ्चाल्यति किं न भणितम्।

॥ पत्र ८५ ॥

20 द्रौपदी। कथं समरव्यापारो वर्तते मे नाथ।

॥ पत्र ८६ ॥

15 द्रौपदी। भद्र कथय कथय।

23 द्रौपदी। ततः कथय।

॥ पत्र ८८ ॥

5 6 द्रौपदी। अपनीतो मे नाथ मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति।

20 द्रौपदी। प्रतिपन्नः समरो न वा।

॥ पत्र ९० ॥

2 3 द्रौपदी। यद्देवस्त्रिभुवननाथ आज्ञापयति तत्र कथमन्यथा भविष्यति।

॥ पत्र ९१ ॥

2—5 द्रौपदी। महाराज किं निमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः पञ्चानामप्यस्माकं

॥ पत्रं १०० ॥

14—17 द्रौपदी। हला बुद्धिमतिके भण मम वचनेन प्रियसखीं सुभद्राम्। वत्साया उत्तरायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य। त्वमेव कुलप्रतिष्ठापक सावधाना रक्षेति। कदापीतो लोकगतस्य श्वशुरकुलस्यास्माकं सलिलबिन्दुदो भविष्यतीति।

॥ पत्रं १०१ ॥

22. 23. द्रौपदी। प्रसीदतु महाराजो ममानेनापश्चिमेन प्रयाणेनाहमेवाग्रतो गमिष्यामि।

॥ पत्रं १०२ ॥

2— 7 चेटी। हा भगवन्तो लोकपाला परित्रायध्वं सोमवंशराजर्षिम्। अयं खलु राजा राजसूयसन्तर्पितहुतवहः खाण्डवसन्तर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः। एषा देवी पाञ्चालराजकुलदेवता वेदिमध्यसंभवा याज्ञसेनी। द्वावपि शरीरेण निष्कृपास्य कालानलस्येन्धनीभवतः। परित्रायध्वं परित्रायध्वम्। किं व्यवसितं देव्या देवेन च।

10. चेटी। यद्देव आज्ञापयति। जयतु जयतु महाराजः।

13. द्रौपदी। महाराज एवं करोमि इह पुनर्ज्वलनं प्रवेक्ष्यामि।

॥ पत्रं १०३ ॥

13. द्रौपदी। कन्ये बुद्धिमतिके देहि म उदकम्।

15. द्रौपदी। कस्मै जलं ददामि।

19. 20. द्रौपदी। नाथ परिजनोपनीतं स्वर्गगतस्य पादोदकं भविष्यत्येतत्।

22. द्रौपदी। उत्तिष्ठ महाराज दूरं गच्छति ते भ्राता।

॥ पत्रं १०४ ॥

2. द्रौपदी। आः प्रज्वलितो भगवान्हुतवहः।

11. 12. द्रौपदी। हा आर्यपुत्र मम स्वयंवरस्वयंग्राहकुटुम्बिक धनञ्जय। प्रिय भ्रातः सभावमानितं न पुनर्महाराजमिमं दासजनं च।

॥ पत्रं १०६ ॥

5. द्रौपदी। कथं न संभावयाम्यद्यापि चितासमीपम्।

॥ पत्रं १०७ ॥

2. 3 चेटी। देवि पूरितप्रतिज्ञाभारो नाथो देव्या वेणीसंहारं कर्तुं त्वामन्विष्यति।

4. द्रौपदी। कन्ये किं मामलीकवचनैराश्वासयसि।

॥ पत्रं १०८ ॥

11. द्रौपदी। जयतु जयतु नाथ।

19. द्रौपदी। आज्ञापयतु नाथ।

21. द्रौपदी। नाथ स्मराम्यनुभवामि च।

॥ पत्रं १०९ ॥

1. 2 द्रौपदी। नाथ विस्मृतास्म्येतं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये।

॥ इति प्राकृतभाषाव्याख्या समाप्ता ॥

3 11 BCD$\beta\gamma$T समभावासु  13 $\alpha\beta\gamma$ (Jag) आकृष्यास्र CD आकृष्ट (D आदृष्ट) श्रोधुसुखे प्रमितनितम्बधू  14 Vers 1—3 fehlen in B, dagegen hat B mit den andern Devanâgari-Handschriften eine in $\alpha\beta\gamma$ (Jag) fehlende Nandî, die in ACDELP mit der Formel पाठान्तर नान्दी । an die erste angefugt wird und so lautet

जयति स नाभिगिता स्वनाभिरम्भोरुहस्रगद्भुतैः ।
दामोदरो नितोदरगह्वरनिक्षिप्तजगदण्ड ॥ १
अपि च ।
जयति स भगवान्कृष्णः शेते य शेषभोगशय्यायाम् ।
मध्येपय पयोधरपर इवाम्भोनिधि कृष्ण ॥ २
अपि च ।
उत्क्षिप्यास्या स्तनान्ते भरमुरगपतेः पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्या ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा व
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्या पुनातु ॥ ३

In Vers 1 b liest T (der diese zweite Nandî gleichfalls vom Text ausgeschlossen hat) statt निक्षिप्त निविष्ट, in Vers 3, b B statt विगलित प्रशिथिल

4 2 अलमतिप्रसङ्गेन fehlt in $\alpha\beta\gamma$T  4 $\beta$ (nach der Lesung Lenz's) und Jag T रामकृष्ण  Vers 4 ist in B und $\alpha\gamma$ zur Nandî gerechnet, नान्द्यन्ते सूत्रधार । अल folgt daher hier auf Vers 4—5 $\beta$ अलमतिविस्तरेण । तत्रभवत परिषदं विज्ञापयामि । $\alpha$ (अलमति° fehlt) समनादवलोक्य । तदत्रपरिषदग्रतान्विज्ञापयामि । $\gamma$ अलमतिविस्तरेण । समन्तादवलोक्य । तत्रभवत परिषदोऽसरान्विज्ञाप्य  T wie $\gamma$, aber statt विज्ञाप्य पर्यान्विज्ञापयामि ।, ausserdem die Lesart अत्रैव अलमतिप्रसङ्गेन भवत परिषदग्रत विज्ञाप्य न किंचिदस्ति । BCD तत्रभवत (in B aus einem ursprunglichen तत्रभवत fehlerhaft corrigirt, in CD durch spatere Hand in तद्भवन्त abgeandert)  Jag liest तत्रभवत्त परिषदग्रतान्विज्ञाप्य । (!)  8 B$\alpha\beta$T यदिद, AC कृतिविपणो B कृतिमभिरूप वेधपो D कृतिरभिरूप यपो $\beta$ कृतिरभिरूपजपो $\gamma$ कृतमभिरूपपणो $\alpha$ कृतिमभिरामी, यपो P कृति यपो (!) T अभिरूपकृति, P वेधविद्यारामक  9 $\alpha$ तदत्रपरिषन्मुख्ये कवे प्रयाककुशलराधानुगतकमुल्लसदुदात्तकवारथपातीतयाव भवति $\gamma$ तत्रपरिषन्मुख्ये कवि T तत्र च कवि, रोपाउदात्त so nur BE$\gamma$, die andern ausser $\beta$ रोधात्

8. 1. Beng. T सह॰। सानुनयम्।; BT आर्य एव; BCDPT एवमतिसंभृतक्रोधेषु (CD कोपेषु), L एवमति (-सभ्रमक्रो॰?), $\alpha\beta$ एवमिति क्रुद्धेषु, $\gamma$ एवमिति कोपेषु. 2. BCPL सहासम् fehlt; beng. T मयि स्थिते; ACP वत्स गुरुखेद. 8. beng. निवर्तस्व गुरुमनुवर्तस्व. 10 und 11. BCD fehlt, 11. L fehlt: एव विज्ञापय. 12. CD$\beta$ लङ्घयसि. 14. CD देवोल्लासित. 16. $\gamma$T इति साटोपम्. 17. 18. $\beta$ प्रालक प्रस्थितः।. 20. CD पि प्रस्नागार, S पसानागार. 22. CD$\beta$ भी॰। मतिक्रम्।. 22. 23. BCD$\beta$ विचिन्त्य, T सदर्पम्; CD पर्यवितव्येव मया; $\beta$T सप्रणाय महदे; $\beta$T (CD) गृहीत्वा। वत्स श्राम्यताम्। सहदेवः। यदादिशत्यार्यः। भीमसेन.। वत्स यदार्य!

9. 1. B$\alpha\gamma$ सख्यमिच्छन्; B$\alpha\gamma$ पश्यतु। परिक्रामत.।, $\beta$T परिक्रम्य।; B (beng.) सहदेव.। इदं पाञ्चाल्याश्चतुःशालं प्रविशत्यार्यः।; T गृहप्रवेशं; beng. T भी॰। सक्रोधं भूमावुपविशति।. 2. $\gamma$T अत्रोपविश्य मुहूर्तमार्य, B अत्रोपविश्य प्रतिपालयत्वार्य. कृ. 5. BC beng. केन पयेन. 7. beng. कथं तस्य, AP हन्त statt अहह तस्य; C$\beta$ एष्यमीदृश. 8. 9. BC beng. T न त्वया कथितं न च मया भीमेन श्रुतम्।. 9. AP setzt die scenische Bemerkung vor तद्वत्स lin. 8. 12. beng. सनस्सस सम्मस्स भट्टिदपि।; beng. T अद्यपाइस्सदि दे मपणु णिच्चाणुबद्धकुलुद्देसो कुमालो भीमसेणो ($\beta$ कुहकुल). 13. $\gamma$T कर्णं दत्त्वा नेपथ्या; CD मुकुरपनोत. 14. CD$\alpha\gamma$ पटलस्थगित $\beta$ व्याप्याकुलित T पटलावृत; AP समीपमुत्सर्पति; beng. तत्कटात्कटतर. 15. beng. ST ज्योतिराये क्रुद्धः च (B क्रोधेध!). 18. CD चेटी।. 19. CD चेटी fehlt; T देवि fehlt, 19. 20. $\gamma$ ($\beta$) यज्ञ-पाइस्सदीति पूर्वोक्त पठति।; A कुरुवैरो B कुरुवेलो; BD कुमार. 21. BD beng. द्रौ॰। निष्क्रम्य।; T एत्रं बुद्धिमदिए; $\beta$ भोदि मति लेय एदं; B पडिउत्तो भवे, beng. T रायो पडिउत्तो वा भवे. 22 und 23. Statt dessen $\beta$ ($\alpha\gamma$, auch in C hinzucorrigirt) und T als andere Lesart „इत्येव दाक्षिणात्यपुस्तके पाठः“ an das vorhergehende anschliessend: ता पाधं पक्खुद (T पेक्खिदु) तुवरदि मे हिअअं ता आदेसेदि मे पत्तउबस्स (T पाधस्स) वाससअणा। चेटी। तं भट्टिदणी आणवेदित्ति (T एदु एदु भट्टिदणी।) (इति) परिक्रान्ताः। चेटी। एद वासंअणा दुवा (T ता) पविसदि (T पविसदु) भट्टिदणी।, hiezu noch T($\alpha\gamma$): द्रौपदी। एव्वं करेदि पाधस्स मह पातअणं। चेटी। ज भट्टिदणी आणावेदि। इति परिक्रम्योपगत्य च।. 23. T उभे प्रविशतः।.

10. 1. T उपसृत्य fehlt, B भ्रेदु भ्रेदु कुमार।. 3. beng. T चेटी। द्रौपदीमुपसृत्य। भट्टिदणि पियं दे णिवेदेमि; AP छक्खिपदि. 4. B ण मानइस्सादि (sic); $\gamma$T सोत्र ता एण उवधि. 5. $\beta$ एवमित्ति उत्र CD एक्खन्त उत्र; B पुणामि beng. पुणाद; $\alpha\gamma$ Jag अवधिद स्सं पणो मम परिभंजणा ($\alpha$ परिरक्खणा) स्सिआदि. 6. ABP सक्रोधम् fehlt. 7. B भणिदव्वं. 11. PT एदिस. 11. 12. CD$\beta$ पुणो वि दाव भणा. 13. P पञ्चाङ्गुल।अन्न. T सदेव पाद. 13—16 $\gamma$ fehlt. 14. T सहस्रो। मन्त्र BC$\beta$ सहस्रो मत्तोंकाश्च S सहस्रो समान्तु; S statt एव एवांयेण. 19. A वाहुणावतान्, BE इन्दुमत्य निष्पन्दस्य CD इन्दुमत्यं नतिन्नयनं (!) मयन्द (D मागाद!!), $\alpha$ कुमारसं मनसं माकन्द, $\beta$ कुमारस्य कुमारसं माकन्द, $\gamma$ कुमारसं माकन्द, L कुमारयं वृकरथं प्रमती, Mah. Bhâr. (ed. Calc.) V, 936 कुमारी। वृक-मृगस्थल माकन्द, L कुमारयं वृकस्थलं प्रमती, Mah. Bhâr. (ed. Calc.) V, 936 कुशस्थलं वृक-स्थलं माकन्दी. 20. BECD$\alpha\beta$ पदस्व घत्; BE अपरिह्रेत च पदनं, CD किंचिदेव पदकं,

